# RATNA-SAMUCHCHAYA

FOR

## High School Classes.






# रत्न-समुच्चयः



श्रीरत्नचन्द्र-बी. ए. ( आनर्स ), एम. ए., साहित्यरत्न-

संगृहीतः



THE STANDARD LITERATURE COMPANY,

ALLAHABAD.

# RATNA-SAMUCHCHAYA

BY

**Prof. RATNA-CHANDRA,**

*B A.* ( *Hons.* ), *M. A.*,

SAHITYA-RATNA.




---

# रत्न-समुच्चयः

श्रीरत्नचन्द्र-बी. ए. ( आनर्स ), एम. ए., साहित्यरत्न-

संगृहीतः

---

PUBLISHED BY

**THE STANDARD LITERATURE COMPANY,**

ALLAHABAD.

---

*First Edition.*] **1932.** [ *Price -/10/-*

Printed by D. L. Nighoskar,
at Shri Lakshmi Narayan Press, Benares.

# PREFACE.

It is perhaps necessary to point out here, in brief, the special features of this selection which is designed to meet the requirements of the High School Students. The first merit of the selection is that its contents, instead of being of a monotonous type, are, both from the point of view of their style as well as subject matter, of a varied nature, which, it is hoped, will help a great deal in keeping up the interest of the students in the study of the book. The alternative arrangement of the prose and verse passages is mainly based on the same considerations.

The contents of the book, mostly taken from well-known standard works, have been graded from the point of view of the difficulty of style and subject-matter. The selection opens with easy and interesting short pieces, mostly of the nature of anecdotes, and gradually introduces more difficult and lengthier passages of a higher standard.

The selection also aims at giving, in a manner not at all wearisome, some moral trend to the education of our youths. Lessons on ब्रह्मचारिनियमाः, इन्द्रियसंयमः, सद्वृत्तम्, आर्यशीलः पुरुषः etc. are meant to help this neglected side of modern education. In lessons like आहारविषये नियमाः (from चरक) and शतायुर्वै पुरुषः the reader will notice another special feature of the selection. The lesson on भारतवर्षमहिमा, taken from the sacred Puranas, which aptly closes the book, is bound to be appreciated by all.

THE COMPILER.

---

# रत्न-समुच्चयः

—०—

## १—व्यवहारबुद्धेरावश्यकता ।

अपि शास्त्रेषु कुशला लोकाचारविवर्जिताः ।
सर्वे ते हास्यतां यान्ति यथा ते मूर्खपण्डिताः ॥

कस्मिंश्चिदधिष्ठाने चत्वारो ब्राह्मणाः परस्परं मित्रत्वमापन्ना वसन्ति स्म। बालभावे तेषां मतिरजायत यद्देशान्तरं गत्वा विद्याया उपार्जनं क्रियत इति । अथान्यस्मिन् दिवसे ते ब्राह्मणाः परस्परं निश्चयं कृत्वा विद्योपार्जनार्थं कान्यकुब्जं गताः । तत्र च विद्यामठे गत्वा पठन्ति । एवं द्वादशाब्दान् यावदेकचित्ततया विद्याकुशलास्ते सर्वे संजाताः । ततस्तैश्चतुर्भिर्मिलित्वोक्तम्—वयं सर्वविद्यापारं गताः, तदुपाध्यायमुत्कलापयित्वा स्वदेशे गच्छामः। एवं मन्त्रयित्वा ब्राह्मणा उपाध्यायमुत्कलापयित्वा, अनुज्ञां लब्ध्वा च पुस्तकानि नीत्वा प्रचलिताः । यावत् किंचिन्मार्गं यान्ति तावद् द्वौ पन्थानौ समायातौ दृष्ट्वोपविष्टाः सर्वे ।

तत्रैकः प्रोवाच—केन मार्गेण गच्छामः ? एतस्मिन्समये तस्मिन्पत्तने कश्चिद् वणिक्पुत्रो मृतः । तस्य दाहार्थे

महाजनो गतोऽभूत् । ततश्चतुर्णां मध्यादेकेन पुस्तकेऽवलोकितम्—"महाजनो येन गतः स पन्थाः" इति । ततस्तेनाभिहितं तन्महाजनमार्गेण गच्छाम इति ।

अथ ते पण्डिता यावन्महाजनमेलापकेन सह यान्ति तावद्रासभः कश्चित्तत्र श्मशाने दृष्टः । अथ द्वितीयेन पुस्तकमुद्घाट्यावलोकितम् । उक्तं च—

उत्सवे व्यसने प्राप्ते दुर्भिक्षे शत्रुसंकटे ।
राजद्वारे श्मशाने च यस्तिष्ठति स बान्धवः ॥ इति ।

तदहो! अस्मदीयो बान्धवः। ततः कश्चित्तस्य ग्रीवायां लगति, कोऽपि पादौ प्रक्षालयति ।

अथ तैः पण्डितैर्दिशामवलोकनं कुर्वद्भिरेव कश्चिदुष्ट्रो द्रुतं गच्छन् दृष्टः । तैश्चोक्तम्—एतत्किम् ? ततस्तृतीयेन पुस्तकमुद्घाट्योक्तम्—"धर्मस्य त्वरिता गतिः" इति, तन्नूनमेष धर्मः साक्षात् । चतुर्थेनोक्तम्—"इष्टं धर्मेण योजयेत्" इति, तद् बान्धवोऽयमस्माकं धर्मेण नियुज्यताम् । अथ तै रासभ उष्ट्रग्रीवायां बद्धः। तत्तु केनचित् तत्स्वामिनो रजकस्याग्रे कथितम् । श्रुत्वा चासौ रजकस्तेषां मूर्खपण्डितानां प्रहारकरणाय समायातः । दृष्ट्वा च तं दूरत एव ते प्रनष्टाः ।

ततः स्तोकं पन्थानमतिक्रम्य प्रधावद्भिस्तैः काचिन्नदी समासादिता । तस्या जलमध्ये पलाशपत्रमायातं दृष्ट्वा पण्डितेनैकेनोक्तम्—"आगमिष्यति यत्पत्रं तदस्मांस्तारयि-



ष्यति" इति । एतत् कथयित्वा तत्पत्रस्योपरि पतितो यावन्नद्या नीयते तावत्तं नीयमानमवलोक्यान्येन पण्डितेन केशान्तं गृहीत्वोक्तम्—

सर्वनाशे समुत्पन्ने अर्धं त्यजति पण्डितः ।
अर्धेन कुरुते कार्यं सर्वनाशो हि दुःसहः ॥

इत्युक्त्वा तस्य शिरश्छेदो विहितः ।

अथ तैः पश्चाद् गत्वा कश्चिद् ग्राम आसादितः । ग्रामीणैर्निमन्त्रिताश्च पृथक् पृथग् गृहेषु नीताः। तत एकस्य सूत्रिका घृतखण्डसंयुक्ता भोजने दत्ता। दृष्ट्वा च तां विचिन्त्य पण्डितेनोक्तं यत्—"दीर्घसूत्री विनश्यति" इति । एवमुक्त्वा भोजनं परित्यज्य गतः । तथा द्वितीयस्य मण्डका दत्ताः। तेनाप्युक्तम्—"अतिविस्तारविस्तीर्णं तद्भवेन्न चिरायुषम्" । इति भोजनं त्यक्त्वा गतः । अथ तृतीयस्य वटिकाभोजनं दत्तम् । तत्रापि पण्डितेनोक्तम्—"छिद्रेष्वनर्था बहुलीभवन्ति" । एवं ते त्रयोऽपि पण्डिताः क्षुत्क्षामकण्ठा लोकैर्हास्यमानास्ततः स्थानात् स्वदेशं प्रत्यागताः ।

ततः साधु इदमुच्यते—

अपि शास्त्रेषु कुशला इत्यादि ।

---

## २—पण्डितलक्षणम् ।

आत्मज्ञानं समारम्भस्तितिक्षा धर्मनित्यता ।
यमर्था नापकर्षन्ति स वै पण्डित उच्यते ॥ १ ॥

निषेवते प्रशस्तानि निन्दितानि न सेवते ।
अनास्तिकः श्रद्दधान एतत्पण्डितलक्षणम् ॥ २ ॥

क्रोधो हर्षश्च दर्पश्च ह्रीः स्तम्भो मान्यमानिता ।
यमर्थान्नापकर्षन्ति स वै पण्डित उच्यते ॥ ३ ॥

यस्य कृत्यं न जानन्ति मन्त्रं वा मन्त्रितं परे ।
कृतमेवास्य जानन्ति स वै पण्डित उच्यते ॥ ४ ॥

यस्य कृत्यं न विघ्नन्ति शीतमुष्णं भयं रतिः ।
समृद्धिरसमृद्धिर्वा स वै पण्डित उच्यते ॥ ५ ॥

यस्य संसारिणी प्रज्ञा धर्मार्थावनुवर्तते ।
कामादर्थं वृणीते यः स वै पण्डित उच्यते ॥ ६ ॥

यथाशक्ति चिकीर्षन्ति यथाशक्ति च कुर्वते ।
न कञ्चिदवमन्यन्ते नराः पण्डितबुद्धयः ॥ ७ ॥

क्षिप्रं विजानाति चिरं शृणोति,
विज्ञाय चार्थं भजते न कामात् ।
नासम्पृष्टो ह्युपयुङ्क्ते परार्थे,
तत्प्रज्ञानं प्रथमं पण्डितस्य ॥ ८ ॥



नाप्राप्यमभिवाञ्छन्ति नष्टं नेच्छन्ति शोचितुम् ।
आपत्सु च न मुह्यन्ति नराः पण्डितबुद्धयः ॥ ९ ॥

निश्चित्य यः प्रक्रमते नान्तर्वसति कर्मणः ।
अबन्ध्यकालो वश्यात्मा स वै पण्डित उच्यते ॥१०॥

आर्यकर्मणि रज्यन्ते भूतिकर्माणि कुर्वते ।
हितं च नाभ्यसूयन्ति पण्डिता भरतर्षभ ॥११॥

न हृष्यत्यात्मसंमाने नावमानेन तप्यते ।
गाङ्गो ह्रद इवाक्षोभ्यो यः स पण्डित उच्यते ॥१२॥

तत्त्वज्ञः सर्वभूतानां योगज्ञः सर्वकर्मणाम् ।
उपायज्ञो मनुष्याणां नरः पण्डित उच्यते ॥१३॥

प्रवृत्तवाक् चित्रकथ ऊहवान् प्रतिभानवान् ।
आशु ग्रन्थस्य वक्ता च यः स पण्डित उच्यते ॥१४॥

श्रुतं प्रज्ञानुगं यस्य प्रज्ञा चैव श्रुतानुगा ।
असम्भिन्नार्यमर्यादः पण्डिताख्यां लभेत सः ॥१५॥

अर्थं महान्तमासाद्य विद्यामैश्वर्यमेव वा ।
विचरत्यसमुन्नद्धो यः स पण्डित उच्यते ॥१६॥

---

## ३—भोज-ब्रह्मचारिसंवादः ।

ततो द्वारपालः प्राह—"देव ! श्रीशैलादागतः कश्चिद्विद्वान् ब्रह्मचर्य्यनिष्ठः द्वारि वर्त्तते" इति । राजा—"प्रवेशय" इत्याह । तत आगत्य ब्रह्मचारी—"चिरं जीव" इति वदति । राजा तं पृच्छति—"ब्रह्मन् ! बाल्ये एव कलिकालाननुरूपं किं नाम व्रतं ते ? अन्वहमुपवासेन कृशोऽसि । कस्यचित् ब्राह्मणस्य कन्यां तुभ्यं दापयिष्यामि, त्वञ्चेद् गृहस्थधर्ममङ्गीकरिष्यसि" इति । ब्रह्मचारी प्राह—"देव ! त्वम् ईश्वरस्त्वया किमसाध्यम् ?—

सारङ्गाः सुहृदो गृहं गिरिगुहा शान्तिः प्रिया गेहिनी,
वृत्तिर्वन्यलताफलैर्निवसनं श्रेष्ठं तरूणां त्वचः ।
तद्ध्यानामृतपूरमग्नमनसां येषामियं निर्वृति-
स्तेषामिन्दुकलाऽवतंसयमिनां मोक्षेऽपि नो न स्पृहा" ॥

राजा उत्थाय पादयोः पतति । आह च—"ब्रह्मन् ! मया किं कर्त्तव्यम् ?" इति । स आह—"देव ! वयं काशीं जिगमिषवः, तत एकं विधेहि, ये त्वत्सदने पण्डितवराः, तान् सर्वानपि सपत्नीकान् काशीं प्रति प्रेषय; ततोऽहं गोष्ठीतृप्तः काशीं गमिष्यामि" इति । राजा तथा चक्रे । ततः सर्वे पण्डितवरास्तदाज्ञया प्रस्थिताः । कालिदास एको न गच्छति स्म । तदा राजा कालिदासं प्राह—"सुकवे ! त्वं कुतो न गतोऽसि" इति । ततः कालिदासो राजानं प्राह—"देव ! सर्वज्ञोऽसि—

ते यान्ति तीर्थेषु बुधा ये शम्भोर्दूरवर्त्तिनः ।
यस्य गौरीश्वरश्चित्ते तीर्थं भोज ! परं हि सः" ॥

---



## ४—भोज-मुख्यामात्यसंवादः ।

कदाचिद्राजानं निरन्तरं दीयमानमवलोक्य मुख्यामात्यो वक्तुमशक्तो राज्ञः शयनभवनभित्तौ व्यक्तान्यक्षराणि लिखितवान्—

"आपदर्थं धनं रक्षेत्"

राजा शयनादुत्थितो गच्छन् भित्तौ तान्यक्षराणि वीक्ष्य स्वयं द्वितीयचरणं लिलेख—

"श्रीमतामापदः कुतः ?"

अपरेद्युः अमात्यो द्वितीयं लिखितं दृष्ट्वा स्वयं तृतीयं लिलेख—

"सा चेदपगता लक्ष्मीः ?"

परेद्युः राजा चतुर्थं लिखति—

"सञ्चितार्थो विनश्यति" ॥

ततः मुख्यामात्यः राज्ञः पादयोः पतति—"देव ! क्षन्तव्योऽयं ममापराधः" ।

---

## ५—मूढलक्षणम् ।

अश्रुतश्च समुन्नद्धो दरिद्रश्च महामनाः ।
अर्थांश्चाकर्मणा प्रेप्सुर्मूढ इत्युच्यते बुधैः ॥ १ ॥
स्वमर्थं यः परित्यज्य परार्थमनुतिष्ठति ।
मिथ्याचरति मित्रार्थे यश्च मूढः स उच्यते ॥ २ ॥
अकामान् कामयति यः कामयानान् परित्यजेत् ।
बलवन्तं च यो द्वेष्टि तमाहुर्मूढचेतसम् ॥ ३ ॥
अमित्रं कुरुते मित्रं मित्रं द्वेष्टि हिनस्ति च ।
कर्म चारभते दुष्टं तमाहुर्मूढचेतसम् ॥ ४ ॥
संसारयति कृत्यानि सर्वत्र विचिकित्सते ।
चिरं करोति क्षिप्रार्थे स मूढो भरतर्षभ ॥ ५ ॥
श्राद्धं पितृभ्यो न ददाति दैवतानि न चार्चति ।
सुहृन्मित्रं न लभते तमाहुर्मूढचेतसम् ॥ ६ ॥
अनाहूतः प्रविशति अपृष्टो बहु भाषते ।
अविश्वस्ते विश्वसिति मूढचेता नराधमः ॥ ७ ॥
परं क्षिपति दोषेण वर्त्तमानः स्वयं तथा ।
यश्च क्रुध्यत्यनीशानः स च मूढतमो नरः ॥ ८ ॥
आत्मनो बलमज्ञाय धर्मार्थपरिवर्जितम् ।
अलभ्यमिच्छन्नैष्कर्म्यान्मूढबुद्धिरिहोच्यते ॥ ९ ॥
अशिष्यं शास्ति यो राजन्यश्च शून्यमुपासते ।
कदर्यं भजते यश्च तमाहुर्मूढचेतसम् ॥ १० ॥



## ६—भोज-तपस्विसम्वादः ।

अन्यदा राजा यानमारुह्य गच्छन् वर्त्मनि कञ्चित्तपोनिधिं दृष्ट्वा तं प्राह—"भवादृशानां दर्शनं भाग्यायत्तम् । भवतां क्व स्थितिः ? भोजनार्थं के वा प्रार्थ्यन्ते ?" इति । ततः स राजवचनमाकर्ण्य तपोनिधिः आह—

"फलं स्वेच्छालभ्यं प्रतिवनमखेदं क्षितिरुहां,
पयः स्थाने स्थाने शिशिरमधुरं पुण्यसरिताम् ।
मृदुस्पर्शा शय्या सुललितलतापल्लवमयी,
सहन्ते सन्तापं तदपि धनिनां द्वारि कृपणाः ॥

राजन् ! वयं कमपि नाभ्यर्थयामः, न गृह्णीमश्च" इति । राजा तुष्टो नमति ।

---

## ७—शिबि-कथा ।

आसीत् शिबिर् नाम नरपतिः । स एकदा इन्द्राद् यज्ञैरत्यरिच्यत । ततस्तं परीक्षितुमिन्द्रोऽग्निश्चाभ्यागच्छताम् । इन्द्रः श्येनोऽभूत्, अग्निश्च कपोतः । कपोतः श्येनभयात् त्रस्तो राज्ञ ऊरुं समासाद्य एवमाह—"राजन्, त्वां सर्वे जना धर्मात्मानं वदन्ति । शरणमागतो रक्षणीय इति धर्मः । अहं च तव शरणमागतः । अतो मामस्मात् श्येनाद् रक्ष" ।

श्येनो राजानमाह—"राजन्, त्वं धर्मात्मासि, तर्हि धर्मविरुद्धं कर्म किं कर्तुमिच्छसि ? अहं क्षुधा पीड्यमानोऽस्मि। इदं चमम भक्षणम्। अतो धर्म-लोभेनास्य रक्षां कुर्वन् त्वं धर्मं मा त्याक्षीः"।

तत् श्रुत्वा राजाह—"श्येन, भयभीतोऽयं कपोतो मम शरणं प्राप्तः। यद्यस्य त्यागं करोमि तदा लोके निन्दां परलोके च नरकं प्राप्स्यामि। किं न श्रुतं त्वया यद्यः कश्चिद् लोकस्य मातरं गां हन्ति, यश्च शरणागतं न रक्षति, तयोस्तुल्यम् पातकम्"।

श्येनः प्राह—"राजन्, सर्वाणि भूतान्याहारात् संभवन्ति, आहारेण च वर्धन्ते। भोजनं विना न हि कश्चित् प्राणान् धारयितुं शक्नोति। भक्ष्याद् वियोजितस्य ममप्राणा अद्य शरीरं विहाय गमिष्यन्ति। मयि मृते, मे पुत्रा दाराश्च मरिष्यन्ति। धर्मात्मन्, त्वमेकस्य कपोतस्य रक्षां कुर्वन् बहून् प्राणान् नाशयसि। धर्मज्ञ, यो धर्मो धर्मं बाधते न स धर्मः, किंतु तत् कुवर्त्म अस्ति"।

अथ तस्य श्येनस्य धर्म-संयुक्तं वच आकर्ण्य राजाह—"श्येन, यदि तवाहारेण प्रयोजनम्, तदाहं ते वराहं मृगं महिषम्, अथवा यद् किंचिदप्यन्यत् त्वं याचसे, ददामि। त्वमपि धर्मज्ञोऽसि। त्वम् एव वद किं शरणागतस्य त्यागः समुचितः ?"



श्येनः प्राह—"महाराज,मम वराहैर्मृगैश्च न किमपि प्रयोजनम्। 'श्येनः कपोतानत्ति' इत्येतां सनातनीं स्थितिं त्वं सम्यग् जानासि। अतः सारं त्यक्त्वाऽसारं मा सेवस्व"।

राजा प्राह—"पक्षिवर! शिबीनामृद्धं राज्यम्, अथवा यत् किंचिदपि त्वं कामयसे तत् सर्वं ते दास्यामि, परं शरणागतं त्वेनं न त्यक्ष्यामि"।

तदा श्येन आह—"नरपते! यद्यस्मिन् कपोते ते सत्यः स्नेहः, तदात्मनो मांसमुत्कृत्य, तुलया च कपोतेन समं कृत्वा मे देहि। अनेन मे तुष्टिर्भविष्यति।"

राजा प्राह—"श्येन, इमं तवानुग्रहं मन्ये यत् त्वं मम मांसं याचसे। तस्मादद्य स्व-मांसं कपोतेन तुलया धृतं ते दास्यामि।"

एवमुक्त्वा परम-धर्म-वित् स राजा शिबिः स्वयं स्वमांसमुत्कृत्य कपोतेन समं तुलयामास। परं ध्रियमाणः कपोतो मांसेनात्यरिच्यत। यदा कपोतेन समं धृतं मांसं न विद्यते तदोत्कृत्तमांसोऽसौ स्वयं तुलामारुरोह। ततः श्येनो धर्म-मूर्तिं राजानमाह—"हे राजन्, अहमिन्द्रोऽस्मि, अयं च कपोतोऽग्निरस्ति। आवां तव धर्मं जिज्ञासमानौ त्वामुपागतौ। येन त्वया स्वगात्रेभ्य उत्कृत्य मांसानि दत्तानि, अतस्तव शाश्वती कीर्तिर्लोकानापूरयिष्यति। यावद् लोके

मनुष्यास्त्वां कथयिष्यन्ति, तावत् कीर्तिः शाश्वता लोकाश्च तव भविष्यन्ति" ।

एवं राजानमुक्त्वा तौ दिवं गतौ । उशीनरोऽपि धर्मेण स्वर्गमारुरोह ।

---

## ८—आर्यशीलः पुरुषः ।

न वैरमुद्दीपयति प्रशान्तं,
न दर्पमारोहति नास्तमेति ।
न दुर्गतोऽस्मीति करोत्यकार्यं,
तमार्यशीलं परमाहुरार्याः ॥ १ ॥

न स्वे सुखे वै कुरुते प्रहर्षं
नान्यस्य दुःखे भवति प्रहृष्टः ।
दत्वा न पश्चात्कुरुतेऽनुतापं
स कथ्यते सत्पुरुषार्यशीलः ॥ २ ॥

---



## ९—भोज-दरिद्रविप्रसंवादः ।

ततः कदाचिद्धारानगरे रात्रौ विचरन् राजा कस्मिंश्चिद् देवालये शीतालुं ब्राह्मणमित्थं पठन्तमवलोक्य स्थितः—

"शीतेनाध्युषितस्य माघजलवच्चिन्तार्णवे मज्जतः,
शान्ताग्नेः स्फुटिताधरस्य धमतः क्षुत्क्षामकुक्षेर्मम ।
निद्रा क्वाप्यवमानितेव दयिता सन्त्यज्य दूरङ्गता,
सत्पात्रप्रतिपादितेव कमला नो हीयते शर्वरी" ॥

इति श्रुत्वा राजा प्रातः तमाहूय पप्रच्छ—"विप्र! पूर्वेद्युः रात्रौ त्वया दारुणः शीतभारः कथं सोढः ?" विप्र आह—

"रात्रौ जानुर्दिवा भानुः कृशानुः सन्ध्ययोर्द्वयोः ।
एवं शीतं मया नीतं जानुभानुकृशानुभिः" ॥

राजा तस्मै सुवर्णकलशत्रयं प्रादात् । ततः कविः राजानं स्तौति—

"धारयित्वा त्वयाऽऽत्मानं महात्यागधनाऽऽयुषा ।
मोचिता बलिकर्णाद्याः स्वयशोगुप्तकर्मणः" ॥

राजा तस्मै लक्षं ददौ ।

---

## १०—भोज-काशीवासिविप्रसंवादः ।

तत उत्तरदेशादागत्य कश्चिद्राजानं "स्वस्ति" इत्याह । तश्च राजा पृच्छति—"विद्वन् ! कुत्र ते स्थितिः ?" इति । विद्वानाह—

"यत्राम्बु निन्दत्यमृतमन्त्यजाश्च सुरेश्वरान् ।
चिन्तामणिश्च पाषाणास्तत्र नो वसतिः प्रभो !" ॥

तदा राजा लक्षं दत्वा प्राह—"काशीदेशे का विशेष-वार्ता ?" इति । स आह—"देव ! इदानीं काचिदद्भुत-वार्ता तत्र लोकमुखेन श्रुता, देवा दुःखेन दीनाः" इति ।

राजा—"देवानां कुतो दुःखं विद्वन् ?" । स चाह—
"निवासः क्वाद्य नो दत्तो भोजेन कनकाचलः ।
इति व्यग्रधियो देवा भोज ! वार्तेति नूतना" ॥
ततो राजा कुतूहलोक्त्या तुष्टः सन् तस्मै पुनः लक्षं ददौ ।

---

## ११—रामस्य गुणवर्णनम् ।

इक्ष्वाकुवंशप्रभवो रामो नाम जनैः श्रुतः ।
नियतात्मा महावीर्यो द्युतिमान्धृतिमान्वशी ॥ १ ॥
बुद्धिमान्नीतिमान्वाग्मी श्रीमाञ्छत्रुनिबर्हणः ।
विपुलांसो महाबाहुः कम्बुग्रीवो महाहनुः ॥ २ ॥



महोरस्को महेष्वासो गूढजत्रुररिंदमः ।
आजानुबाहुः सुशिराः सुललाटः सुविक्रमः ॥ ३ ॥
समः समविभक्ताङ्गः स्निग्धवर्णः प्रतापवान् ।
पीनवक्षा विशालाक्षो लक्ष्मीवाञ्छुभलक्षणः ॥ ४ ॥
धर्मज्ञः सत्यसन्धश्च प्रजानां च हिते रतः ।
यशस्वी ज्ञानसम्पन्नः शुचिर्वश्यः समाधिमान् ॥ ५ ॥
प्रजापतिसमः श्रीमान्धाता रिपुनिषूदनः ।
रक्षिता जीवलोकस्य धर्मस्य परिरक्षिता ॥ ६ ॥
रक्षिता स्वस्य धर्मस्य स्वजनस्य च रक्षिता ।
वेदवेदाङ्गतत्त्वज्ञो धनुर्वेदे च निष्ठितः ॥ ७ ॥
सर्वशास्त्रार्थतत्त्वज्ञः स्मृतिमान्प्रतिभानवान् ।
सर्वलोकप्रियः साधुरदीनात्मा विचक्षणः ॥ ८ ॥
सर्वदाभिगतः सद्भिः समुद्र इव सिन्धुभिः ।
आर्यः सर्वसमश्चैव सदैव प्रियदर्शनः ॥ ९ ॥
स च सर्वगुणोपेतः कौशल्यानन्दवर्धनः ।
समुद्र इव गाम्भीर्ये धैर्येण हिमवानिव ॥१०॥
विष्णुना सदृशो वीर्ये सोमवत्प्रियदर्शनः ।
कालाग्निसदृशः क्रोधे क्षमया पृथिवीसमः ॥११॥

---

## १२—तूलव्यवसायिनः कथा।

एकदा कश्चित्तूलव्यवसायी तूलविक्रयाय आपणं जगाम। तत्र तु तूलं विशुद्धं नास्तीति कृत्वा कोऽपि तस्य तूलं न जग्राह। स तद् गृहीत्वा प्रत्यावर्तमानो मार्गे एकस्मिन् स्वर्णकारालयेऽग्नौ निक्षेपेण स्वर्णं संशोधयन्तं कमपि स्वर्णकारमपश्यत्। तं दृष्ट्वा पृष्टवान् "भो भद्र! किमेतत् क्रियते ?" इति। स उवाच "मयैतेन उपायेन स्वर्णं संशोध्यते"। तूलव्यवसायिना चिन्तितं यदग्निदाहेन सर्वमेव विशुद्धं भवति। अतस्तेन गृहमागत्य अग्निः प्रज्वालितः। तच्च तूलं तस्मिन् निचिक्षिपे। दग्धे तु तस्मिन् स हतबुद्धिर्बभूव। सर्वे प्रतिवेशिनश्च तमुपजहसुः।

अतः खलु सत्यमुच्यते—

अज्ञानाः कुधियो मूढा अपरीक्षितकारिणः।
सम्यङ् न प्रविचार्यार्थं विडम्ब्यन्ते हि सर्वथा॥

---

## १३-इन्द्रियसंयमः।

इन्द्रियाणां विचरतां विषयेष्वपहारिषु।
संयमे यत्नमातिष्ठेद्विद्वान्यन्तेव वाजिनाम्॥१॥
एकादशेन्द्रियाण्याहुर्यानि पूर्वे मनीषिणः।
तानि सम्यक् प्रवक्ष्यामि यथावदनुपूर्वशः॥२॥



श्रोत्रं त्वक् चक्षुषी जिह्वा नासिका चैव पञ्चमी।
पायूपस्थं हस्तपादं वाक्चैव दशमी स्मृता॥३॥
बुद्धीन्द्रियाणि पञ्चैषां श्रोत्रादीन्यनुपूर्वशः।
कर्मेन्द्रियाणि पञ्चैषां पाय्वादीनि प्रचक्षते॥४॥
एकादशं मनो ज्ञेयं स्वगुणेनोभयात्मकम्।
यस्मिञ्जिते जितावेतौ भवतः पञ्चकौ गणौ॥५॥
इन्द्रियाणां प्रसङ्गेन दोषमृच्छत्यसंशयम्।
संनियम्य तु तान्येव ततः सिद्धिं नियच्छति॥६॥
न जातु कामः कामानामुपभोगेन शाम्यति।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते॥७॥
यश्चैतान्प्राप्नुयात्सर्वान्यश्चैतान्केवलांस्त्यजेत्।
प्रापणात्सर्वकामानां परित्यागो विशिष्यते॥८॥
न तथैतानि शक्यन्ते संनियन्तुमसेवया।
विषयेषु प्रजुष्टानि यथा ज्ञानेन नित्यशः॥९॥
वेदास्त्यागश्च यज्ञाश्च नियमाश्च तपांसि च।
न विप्रदुष्टभावस्य सिद्धिं गच्छन्ति कर्हिचित्॥१०॥
श्रुत्वा स्पृष्ट्वा च दृष्ट्वा च भुक्त्वा घ्रात्वा च यो नरः।
न हृष्यति ग्लायति वा स विज्ञेयो जितेन्द्रियः॥११॥
इन्द्रियाणां तु सर्वेषां यद्येकं क्षरतीन्द्रियम्।
तेनास्य क्षरति प्रज्ञा दृतेः पात्रादिवोदकम्॥१२॥

वशे कृत्वेन्द्रियग्रामं संयम्य च मनस्तथा ।
सर्वान्संसाधयेदर्थानक्षिण्वन्योगतस्तनुम् ॥१३॥

---

## १४—कम्बुग्रीवकथा ।

सुहृदां हितकामानां न करोतीह यो वचः ।
स कूर्म्म इव दुर्बुद्धिः काष्ठाद् भ्रष्टो विनश्यति ॥

अस्ति कस्मिंश्चिद् जलाशये कम्बुग्रीवो नाम कच्छपः । तस्य च सङ्कटविकटनाम्नी मित्रे हंसजातीये परमस्नेहकोटिमाश्रिते नित्यमेव सरस्तीरमासाद्य तेन सह अनेकदेवर्षिमहर्षीणां कथाः कृत्वा, अस्तमयवेलायां स्वनीडसंश्रयं कुरुतः । अथ गच्छता कालेन अवृष्टिवशात् सरः शनैः शनैः शोषमगमत् । ततस्तद्दुःखदुःखितौ तौ ऊचतुः—'भो मित्र ! जम्बालशेषमेतत्सरः सञ्जातम् । तत् कथं भवान् भविष्यति ? इति व्याकुलत्वं नो हृदि वर्तते' । तत् श्रुत्वा कम्बुग्रीव आह—'भोः ! साम्प्रतं न अस्ति अस्माकं जीवितव्यं जलाभावात् । तथाऽपि उपायश्चिन्त्यतामिति । उक्तश्च—

त्याज्यं न धैर्य्यं विधुरेऽपि काले
धैर्य्यात् कदाचिद् गतिमाप्नुयात् सः ।



यथा समुद्रेऽपि च पोतभङ्गे
सांयात्रिको वाञ्छति तर्तुमेव ॥

अपरञ्च ।

मित्रार्थे बान्धवार्थे च बुद्धिमान् यतते सदा ।
जातास्वापत्सु यत्नेन जगादेदं वचो मनुः ॥

तद् आनीयतां काचित् दृढरज्जुः लघुकाष्ठं वा, अन्विष्यताञ्च प्रभूतजलसनाथं सरः, येन मया मध्यप्रदेशे दन्तैर्गृहीते सति युवां कोटिभागयोः तत् काष्ठं मया सहितं संगृह्य तत्सरो नयथः' । तौ ऊचतुः । 'भो मित्र ! एवं करिष्यावः, परं भवता मौनव्रतेन स्थातव्यं, नो चेत् तव काष्ठात् पातो भविष्यति' । तथा अनुष्ठिते, गच्छता कम्बुग्रीवेण अधोभागव्यवस्थितं किञ्चित् पुरमालोकितम् । तत्र ये पौराः ते तथा नीयमानं विलोक्य सविस्मयमिदमूचुः—'अहो ! चक्राकारं किमपि पक्षिभ्यां नीयते, पश्यत पश्यत' अथ तेषां कोलाहलमाकर्ण्य कम्बुग्रीव आह—'भोः ! किमेष कोलाहलः ?' इति वक्तुमना अर्द्धोक्ते पतितः, पौरैः खण्डशः कृतश्च ।

अतः सत्यमुच्यते—

'सुहृदां हितकामानाम्' इत्यादि ।

---

## १५—श्रीः कुत्र वसति ?

युधिष्ठिर उवाच—

कीदृशे पुरुषे तात स्त्रीषु वा पुरुषर्षभ ।
श्रीः पद्मा वसते नित्यं तन्मे ब्रूहि पितामह ॥१॥

भीष्म उवाच—

नारायणस्याङ्गगतां ज्वलन्तीं दृष्ट्वा श्रियं पद्मसमानवर्णाम् ।
कौतूहलाद्विस्मितचारुनेत्रा पप्रच्छ माता मकरध्वजस्य ॥२॥
कानीह भूतान्युपसेवसे त्वं संतिष्ठसे कानिव सेवसे त्वम् ।
तानि त्रिलोकेश्वरभूतकान्ते तत्त्वेन मे ब्रूहि महर्षिकल्पे ॥३॥

श्रीरुवाच—

वसामि नित्यं सुभगे प्रगल्भे
दक्षे नरे कर्मणि वर्तमाने ।
अक्रोधने देवपरे कृतज्ञे
जितेन्द्रिये नित्यमुदीर्णसत्त्वे ॥४॥
स्वाध्यायनित्येषु सदा द्विजेषु
क्षत्रे च धर्माभिरते सदैव ।
वैश्ये च कृष्याभिरते वसामि
शूद्रे च शुश्रूषणनित्ययुक्ते ॥५॥
नाकर्मशीले पुरुषे वसामि न नास्तिके साङ्करिके कृतघ्ने ।
न भिन्नवृत्ते न नृशंसवर्णे न चापि चौरे न गुरुष्वसूये ॥६॥



ये चाल्पतेजोबलसत्त्वमानाः
क्लिश्यन्ति कुप्यन्ति च यत्र तत्र ।
न चैव तिष्ठामि तथाविधेषु
नरेषु संगुप्तमनोरथेषु ॥ ७ ॥
यश्चात्मनि प्रार्थयते न किञ्चिद्
यश्च स्वभावोपहतान्तरात्मा ।
तेष्वल्पसंतोषपरेषु नित्यं
नरेषु नाहं निवसामि देवि ॥ ८ ॥
प्रकीर्णभाण्डामनपेक्षकारिणीं
सदा च भर्तुः प्रतिकूलवादिनीम् ।
परस्य वेश्माभिरतामलज्जा-
मेवंविधां स्त्रीं परिवर्जयामि ॥ ९ ॥
सत्यासु नित्यं प्रियदर्शनासु
सौभाग्ययुक्तासु गुणान्वितासु ।
वसामि नारीषु पतिव्रतासु
कल्याणशीलासु विभूषितासु ॥१०॥
नदीषु हंसस्वननादितासु
तपस्विसिद्धद्विजसेवितासु ।
मत्ते गजे गोवृषभे नरेन्द्रे
सिंहासने सत्पुरुषे च नित्यम् ॥११॥

नाहं शरीरेण वसामि देवि
नैवं मया शक्यमिहाभिधातुम् ।
भावेन यस्मिन् निवसामि पुंसि
स वर्धते धर्मयशोऽर्थकामैः ।। २।।

———

## १६—जरद्गवगृध्रकथा ।

अस्ति भागीरथीतीरे महान् पर्कटीवृक्षः । तस्य कोटरे दैवदुर्विपाकात् गलितनखनयनो जरद्गवो नाम गृध्रः प्रतिवसति स्म । अथ तज्जीवनाय तद्वृक्षवासिनः पक्षिणः सर्वे कृपया स्वाहारात् किञ्चित् किञ्चित् उद्धृत्य ददति । तेन हि स जीवति, पक्षिशावकानां रक्षां च करोति ।

अथ कदाचित् दीर्घकर्णनामा मार्जारः पक्षिशावकान् भक्षयितुं तत्रागतः । ततस्तमायान्तं दृष्ट्वा पक्षिशावकैर्भयार्तैः कोलाहलः कृतः । तं श्रुत्वा जरद्गवेनोक्तम्—'कोऽयमायाति ?'

दीर्घकर्णो गृध्रमवलोक्य सभयमाह—'हा हतोऽस्मि । अधुनास्यातिसन्निधानेन पलायनमप्यशक्यम् । तत् यथा भवितव्यं तद् भवतु । अहं तावद् विश्वासमुत्पाद्य अस्य समीपमुपगच्छामि' । इत्यालोच्य तमुपसृत्याब्रवीत् 'आर्य ! त्वामभिवन्दे' । गृध्रोऽवदत्—'कस्त्वम् ?' सोऽवदत्—



'मार्जारोऽहम्' । गृध्रो ब्रूते—'दूरमपसर, नो चेत् हन्तव्योऽसि मया' । मार्जारोऽवदत्—'श्रूयतां तावन्मम वचनम् । ततो यद्यहं वध्यस्तदा हन्तव्यः ।

यतः—जातिमात्रेण किं कश्चिद् हन्यते पूज्यते क्वचित् ।
व्यवहारं परिज्ञाय वध्यः पूज्योऽथवा भवेत् ।।

गृध्रो ब्रूते—'ब्रूहि, किमर्थमागतोऽसि ?' सोऽवदत्—'अहमत्र गङ्गातीरे नित्यस्नायी निरामिषाशी ब्रह्मचर्येण चान्द्रायणव्रतमाचरंस्तिष्ठामि । यूयं धर्मज्ञानरताः प्रेमविश्वासभूमयः—इति पक्षिणः सर्वे सर्वदा ममाग्रे प्रस्तुवन्ति । अतो भवद्भ्यो विद्यावयोवृद्धेभ्यो धर्मं श्रोतुमिहागतः । भवन्तश्च एतादृशा धर्म्मज्ञा यन्मामतिथिं हन्तुमुद्यताः ।

गृहस्थधर्म्मश्चैषः—

अरावप्युचितं कार्यमातिथ्यं गृहमागते ।
छेत्तुः पार्श्वगतां छायां नोपसंहरति द्रुमः ।।

किञ्च यद्यन्नं नास्ति, तदा प्रीतिवचसापि तावदतिथिः पूज्यः । तथा चोक्तम्—

तृणानि भूमिरुदकं वाक् चतुर्थी च सूनृता ।
एतान्यपि सतां गेहे नोच्छिद्यन्ते कदाचन ।।

किञ्च,

अतिथिर्यस्य भग्नाशो गृहात् प्रतिनिवर्त्तते ।
स तस्मै दुष्कृतं दत्वा पुण्यमादाय गच्छति ।।

उत्तमस्यापि वर्णस्य नीचोऽपि गृहमागतः ।
पूजनीयो यथायोग्यं सर्वदेवमयोऽतिथिः ॥'

गृध्रोऽवदत्—'मार्जारा हि मांसरुचयः; पक्षिशावकाश्च अत्र निवसन्ति; तेनाहमेवं ब्रवीमि'। मार्जारोऽप्येवं श्रुत्वा भूमिं स्पृष्ट्वा कर्णौ स्पृशति, ब्रूते च—'मया धर्म्मशास्त्रं श्रुत्वा वीतरागेणेदं दुष्करं चान्द्रायणव्रतमध्यवसितम्। यतः परस्परं विवदमानानामपि धर्मशास्त्राणाम्—"अहिंसा परमो धर्म्म" इत्यत्रैकमत्यम्।

यतः—

योऽत्ति यस्य यदा मांसमुभयोः पश्यतान्तरम् ।
एकस्य क्षणिका प्रीतिरन्यः प्राणैर्विमुच्यते ॥

अपि च—

स्वच्छन्दवनजातेन शाकेनापि प्रपूर्य्यते ।
अस्य दग्धोदरस्यार्थे कः कुर्यात् पातकं महत् ॥'

एवं विश्वास्य स मार्जारस्तरुकोटरे स्थितः। ततो दिनेषु गच्छत्सु स पक्षिशावकान् आक्रम्य कोटरमानीय प्रत्यहं खादति। अथ येषामपत्यानि खादितानि, तैः शोकार्त्तैर्विलपद्भिः इतस्ततो जिज्ञासा समारब्धा। तत् परिज्ञाय मार्जारः कोटरात् निःसृत्य बहिः पलायितः। पश्चात् पक्षिभिरितस्ततो निरूपयद्भिस्तत्र तरुकोटरे शावकास्थीनि प्राप्तानि। अनन्तरञ्च अनेनैव जरद्गवेन अस्माकं



शावकाः खादिता' इति निश्चित्य सर्वैः पक्षिभिर्मिलित्वा स गृध्रो व्यापादितः।

अत एवमुच्यते—

अज्ञातकुलशीलस्य वासो देयो न कस्यचित् ।
मार्जारस्य हि दोषेण हतो गृध्रो जरद्गवः ॥

---

## १७—दैवपुरुषकारौ ।

युधिष्ठिर उवाच—

पितामह महाभाग सर्वशास्त्रविशारद ।
दैवे पुरुषकारे च किंस्विच्छ्रेष्ठतरं भवेत् ॥ १ ॥

भीष्म उवाच—

नाबीजं जायते किंचिन्न बीजेन विना फलम् ।
बीजाद्बीजं प्रभवति बीजादेव फलं स्मृतम् ॥ २ ॥
यादृशं वपते बीजं क्षेत्रमासाद्य कर्षकः ।
सुकृते दुष्कृते वापि तादृशं लभते फलम् ॥ ३ ॥
यथा बीजं विना क्षेत्रमुप्तं भवति निष्फलम् ।
तथा पुरुषकारेण विना दैवं न सिध्यति ॥ ४ ॥
क्षेत्रं पुरुषकारस्तु दैवं बीजमुदाहृतम् ।
क्षेत्रबीजसमायोगात्ततः सस्यं समृध्यते ॥ ५ ॥

कर्मणः फलनिर्वृत्तिं स्वयमश्नाति कारकः ।
प्रत्यक्षं दृश्यते लोके कृतस्यापकृतस्य च ॥ ६ ॥
शुभेन कर्मणा सौख्यं दुःखं पापेन कर्मणा ।
कृतं फलति सर्वत्र नाकृतं भुज्यते क्वचित् ॥ ७ ॥
कृती सर्वत्र लभते प्रतिष्ठां भाग्यसंयुताम् ।
अकृती लभते भ्रष्टः क्षते क्षारावसेचनम् ॥ ८ ॥
तपसा रूपसौभाग्यं रत्नानि विविधानि च ।
प्राप्यते कर्मणा सर्वं न दैवादकृतात्मना ॥ ९ ॥
ज्योतींषि त्रिदशा नागा यक्षाश्चन्द्रार्कमारुताः ।
सर्वे पुरुषकारेण मानुष्याद्देवतां गताः ॥१०॥
अर्थो वा मित्रवर्गो वा ऐश्वर्यं वा कुलान्वितम् ।
श्रीश्चापि दुर्लभा भोक्तुं तथैवाकृतकर्मभिः ॥११॥
नादातारं भजन्त्यर्था न क्लीबं नापि निष्क्रियम् ।
नाकर्मशीलं नाशूरं तथा नैवातपस्विनम् ॥१२॥
स्वं चेत् कर्मफलं न स्यात् सर्वमेवाफलं भवेत् ।
लोको दैवं समालक्ष्य उदासीनो भवेन्ननु ॥१३॥
आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ।
आत्मैव ह्यात्मनः साक्षी कृतस्यापकृतस्य च ॥१४॥
दैवानां शरणं पुण्यं सर्वं पुण्यैरवाप्यते ।
पुण्यशीलं नरं प्राप्य किं दैवं प्रकरिष्यति ॥१५॥



पुरा ययातिर्विभ्रष्टश्च्यावितः पतितः क्षितौ ।
पुनरारोपितः स्वर्गं दौहित्रैः पुण्यकर्मभिः ॥१६॥
अश्वमेधादिभिर्यज्ञैः सत्कृतः कोसलाधिपः ।
महर्षिशापात् सौदासः पुरुषादत्वमागतः ॥१७॥
वसुर्यज्ञशतैरिष्ट्वा द्वितीय इव वासवः ।
मिथ्याभिमानेनैकेन रसातलतलं गतः ॥१८॥
पाण्डवानां हृतं राज्यं धार्तराष्ट्रैर्महाबलैः ।
पुनः प्रत्याहृतं चैव न दैवाद् भुजसंश्रयात् ॥१९॥
यथाग्निः पवनोद्धूतः सुसूक्ष्मोऽपि महान् भवेत् ।
तथा कर्मसमायुक्तं दैवं साधु विवर्धते ॥२०॥
विपुलमपि धनौघं प्राप्य भोगान् स्त्रियो वा
पुरुष इह न शक्तः कर्महीनो विभोक्तुम् ।
सुनिहितमपि चार्थं दैवतै रक्ष्यमाणं
पुरुष इह महात्मा प्राप्नुते नित्ययुक्तः ॥२१॥

---

## १८—भोज-माघपत्नीसम्वादः ।

अत्रान्तरे धारानगर्यां भोजं प्राप्य द्वारपालः प्राह—"देव ! गुर्जरदेशात् माघनामा पण्डितवर आगत्य नगराद् बहिरास्ते । तेन च स्वपत्नी राजद्वारि प्रेषिता" । राजा—"तां प्रवेशय" इत्याह । ततो माघपत्नी प्रवेशिता । सा

राजहस्ते पत्रं प्रायच्छत् । राजा तदादाय वाचयति—

"कुमुदवनमपश्रि श्रीमदम्भोजषण्डं
त्यजति मुदमुलूकः प्रीतिमांश्चक्रवाकः ।
उदयमहिमरश्मिर्याति शीतांशुरस्तं
हतविधिनिहतानां हा ! विचित्रो विपाकः" ॥ इति ।

राजा तदद्भुतं प्रभातवर्णनमाकर्ण्य लक्षत्रयं दत्वा माघपत्नीमाह—"मातः ! इदं भोजनाय दीयते; प्रातरहं माघपण्डितमागत्य नमस्कृत्य पूर्णमनोरथं करिष्यामि" इति । ततः सा तदादाय गच्छन्ती याचकानां मुखात् स्वभर्तुः शारदचन्द्रकिरणगौरान् गुणान् श्रुत्वा, तेभ्य एव धनमखिलं भोजदत्तं दत्तवती । ततो माघपण्डितं स्वभर्तारम् आसाद्य प्राह—"नाथ ! राज्ञा भोजेनाहं बहुमानिता; धनं सर्वं याचकेभ्यस्त्वद्गुणानाकर्ण्य दत्तवती ।" माघः प्राह—"देवि ! साधु कृतं, परमेते याचकाः समायान्ति किल, तेभ्यः किं देयम् ?" इति । ततो माघपण्डितं वस्त्रावशेषं ज्ञात्वा कोऽप्यर्थी प्राह—

"आश्वास्य पर्वतकुलं तपनोष्णतप्त-
मुद्दामदावविधुराणि च काननानि ।
नानानदीनदशतानि च पूरयित्वा
रिक्तोऽसि यज्जलद ! सैव तवोत्तमश्रीः ॥"



इत्येतदाकर्ण्य माघः स्वपत्नीमाह—

"अर्था न सन्ति न च मुञ्चति मां दुराशा
त्यागे रतिं वहति दुर्ललितं मनो मे ।
याच्ञा च लाघवकरी स्ववधे च पापं
प्राणाः स्वयं व्रजत किं परिदेवितेन ? ॥
दारिद्र्यानलसन्तापः शान्तः सन्तोषवारिणा ।
याचकाशाविघातान्तर्दाहः केनोपशाम्यति ?" ॥ इति ।

ततस्तदा माघपण्डितस्य तामवस्थां विलोक्य सर्वे याचका यथास्थानं जग्मुः । एवं तेषु याचकेषु यथायथं गच्छत्सु माघः प्राह—

"व्रजत व्रजत प्राणा ! अर्थिभिर्व्यर्थतां गतैः ।
पश्चादपि च गन्तव्यं क्व सोऽर्थः पुनरीदृशः ?" ॥

इति विलपन् माघपण्डितः परलोकमगात् । ततो माघपत्नी स्वामिनं परलोकगतं दृष्ट्वा प्राह—

"सेवन्ते स्म गृहं यस्य दासवद् भूभुजः सदा ।
स स्वभार्यासहायोऽयं म्रियते माघपण्डितः ॥"

ततो राजा माघं विपन्नं ज्ञात्वा निजनगराद्विप्रशताऽऽवृतः मौनी रात्रावेव तत्राऽऽगात् । ततो माघपत्नी राजानं वीक्ष्य प्राह—"राजन् ! यतः पण्डितवरस्त्वद्देशं प्राप्तः परलोकमगात्, ततोऽस्य कृत्यशेषं सम्यक् करणीयं भवता"

इति । ततो राजा माघं विपन्नं नर्मदातीरं नीत्वा यथोक्तेन विधिना संस्कारमकरोत् । तत्र च माघपत्नी वह्नौ प्रविष्टा । तयोश्च पुत्रवत् सर्वं चक्रे भोजः ।

---

## १९—ब्रह्मचारिनियमाः ।

सेवेतेमांस्तु नियमान्ब्रह्मचारी गुरौ वसन् ।
सन्नियम्येन्द्रियग्रामं तपोवृद्ध्यर्थमात्मनः ॥१॥
नित्यं स्नात्वा शुचिः कुर्याद्देवर्षिपितृतर्पणम् ।
देवताभ्यर्चनं चैव समिदाधानमेव च ॥२॥
वर्जयेन्मधु मांसं च गन्धं माल्यं रसान्स्त्रियः ।
शुक्तानि यानि सर्वाणि प्राणिनां चैव हिंसनम् ॥३॥
अभ्यङ्गमञ्जनं चाक्ष्णोरुपानच्छत्रधारणम् ।
कामं क्रोधं च लोभं च नर्तनं गीतवादनम् ॥४॥
द्यूतं च जनवादं च परिवादं तथानृतम् ।
स्त्रीणां च प्रेक्षणालम्भमुपघातं परस्य च ॥५॥
एकः शयीत सर्वत्र न रेतः स्कन्दयेत्क्वचित् ।
कामाद्धि स्कन्दयन्रेतो हिनस्ति व्रतमात्मनः ॥६॥

---



## २०—बुद्धिर्यस्य बलं तस्य ।

कस्मिंश्चिद्वने भासुरको नाम सिंहः प्रतिवसति स्म । अथासौ वीर्य्यातिरेकात् नित्यमेव अनेकान् मृगशशकादीन् व्यापादयन् न उपरराम । अथ अन्येद्युस्तद्वनजाः सर्वे सारङ्गवराहमहिषशशकादयो मिलित्वा तमभ्युपेत्य प्रोचुः—'स्वामिन् किमनेन सकलमृगवधेन नित्यमेव ? यतस्तव एकेनापि मृगेण तृप्तिर्भवति, तत् क्रियतामस्माभिः सह समयधर्मः । अद्यप्रभृति तव अत्र उपविष्टस्य जातिक्रमेण प्रतिदिनमेको मृगो भक्षणार्थं समेष्यति । एवं कृते तव तावत् प्राणयात्रा क्लेशं विना अपि भविष्यति, अस्माकञ्च पुनः सर्वोच्छेदनं न स्यात् । तदेष राजधर्मोऽनुष्ठीयताम् । उक्तञ्च,

यथा गौर्दुह्यते काले पाल्यते च तथा प्रजाः ।
सिच्यते चीयते चैव लता पुष्पफलप्रदा ॥
यथा बीजाङ्कुरः सूक्ष्मः प्रयत्नेनाभिरक्षितः ।
फलप्रदो भवेत्काले तद्वल्लोकः सुरक्षितः ॥

अथ तेषां तद्वचनमाकर्ण्य भासुरक आह—'अहो ! सत्यमभिहितं भवद्भिः, परं यदि मम उपविष्टस्य अत्र नित्यमेव नैकः श्वापदः समागमिष्यति, तन्नूनं सर्वानपि भक्षयिष्यामि' ।

अथ ते तथैव प्रतिज्ञाय निर्वृतिभाजः तत्रैव वने निर्भयाः पर्यटन्ति । एकश्च प्रतिदिनं क्रमेण याति; वृद्धो वा, वैराग्य-

युक्तो वा, शोकग्रस्तो वा, पुत्रकलत्रनाशभीतो वा, तेषां मध्यात् तस्य भोजनार्थं मध्याह्नसमये उपतिष्ठते। अथ कदाचित् जातिक्रमाच्छशकस्य अवसरः समायातः। स समस्तमृगैः प्रेरितोऽनिच्छन्नपि मन्दं मन्दं गत्वा तस्य वधोपायं चिन्तयन् वेलाऽतिक्रमं कृत्वा व्याकुलितहृदयो यावद् गच्छति, तावत् मार्गे गच्छता कूपः संदृष्टः। यावत् कूपोपरि याति, तावत् कूपमध्ये आत्मनः प्रतिबिम्बं ददर्श। दृष्ट्वा च तेन हृदये चिन्तितम्—'यद्भव्य उपायोऽस्ति, अहं भासुरकं प्रकोप्य स्वबुद्ध्या अस्मिन् कूपे पातयिष्यामि'। अथ असौ दिनशेषे भासुरकसमीपं प्राप्तः। सिंहोऽपि वेलातिक्रमेण क्षुत्क्षामकण्ठः कोपाविष्टः सृक्कणी परिलेलिहन् व्यचिन्तयत्—'अहो! प्रातराहाराय निःसत्त्वं वनं मया कर्त्तव्यम्'। एवं चिन्तयतस्तस्य शशको मन्दं मन्दं गत्वा प्रणम्य तस्य अग्रे स्थितः।

अथ तं प्रज्वलितात्मा भासुरको भर्त्सयन्नाह—'रे शशकाधम! एकतः तावत् त्वं लघुः प्राप्तः, अपरतः वेलातिक्रमेण, तदस्मादपराधात् त्वां निपात्य प्रातः सकलान्यपि मृगकुलानि उच्छेदयिष्यामि'। अथ शशकः सविनयं प्रोवाच—'स्वामिन्! न अपराधो मम, न च सत्त्वानां, तत् श्रूयतां कारणम्'। सिंह आह—'सत्वरं निवेदय, यावत् मम दंष्ट्रान्तर्गतो न भवान् भविष्यति' इति।



शशक आह—'स्वामिन्! समस्तमृगैरद्य जातिक्रमेण मम लघुतरस्य प्रस्तावं विज्ञाय ततोऽहं पञ्चशशकैः समं प्रेषितः। ततश्च अहमागच्छन् अन्तराले महता केनचिदपरेण सिंहेन विवरान्निर्गत्य अभिहितः—'रे क्व प्रस्थिता यूयम्? अभीष्टदेवतां स्मरत'। ततो मयाऽभिहितम्—'वयं स्वामिनो भासुरकसिंहस्य सकाशे आहारार्थं समयधर्मेण गच्छामः'। ततः तेन अभिहितम्—'यद्येवं, तर्हि मदीयमेतद्वनं, मया सह समयधर्मेण समस्तैरपि श्वापदैर्वर्तितव्यम्। चौररूपी स भासुरकः। अथ यदि सोऽत्र राजा, ततो विश्वासस्थाने चतुरः शशकानत्र धृत्वा तमाहूय द्रुततरमागच्छ, येन यः कश्चिदावयोर्मध्यात् पराक्रमेण राजा भविष्यति, स सर्वानेतान् भक्षयिष्यति' इति। ततोऽहं तेनादिष्टः स्वामिसकाशमभ्यागतः, एतत् वेलाव्यतिक्रमकारणम्। तदत्र स्वामी प्रमाणम्' इति। तच्छ्रुत्वा भासुरक आह—'भद्र! यदि एवं, तत् सत्वरं दर्शय मे तं चौरसिंहं येन अहं मृगकोपं तस्य उपरि क्षिप्त्वा स्वस्थो भवामि'। शशक आह—'अस्त्येतत्, तथापि बलवान् स मया दृष्टः, तत् न युज्यते स्वामिनस्तस्य सामर्थ्यमविदित्वा गन्तुम्'।

भासुरक आह—'भोः! किं तव अनेन व्यापारेण? दर्शय मे तं दुर्गस्थमपि'। अथ शशक आह—'यद्येवं, तर्हि आगच्छतु स्वामी'। एवमुक्त्वा अग्रे व्यवस्थितः। ततश्च तेन

आगच्छता यः कूपो दृष्टोऽभूत्, तमेव कूपमासाद्य भासुरक-माह—'स्वामिन्! कस्ते प्रतापं सोढुं समर्थः? त्वां दृष्ट्वा दूरतोऽपि चौरसिंहः प्रविष्टः स्वं दुर्गं, तदागच्छ, येन दर्शयामि' इति। भासुरक आह—'दर्शय मे दुर्गम्'। तदनु दर्शितस्तेन कूपः। ततः सोऽपि मूर्खः सिंहः कूपमध्ये आत्मप्रतिबिम्बं जलमध्यगतं दृष्ट्वा सिंहनादं मुमोच। ततः प्रतिशब्देन कूपमध्याद् द्विगुणतरो नादः समुत्थितः। अथ तेन तं शत्रुं मत्वा आत्मानं तस्य उपरि प्रक्षिप्य प्राणाः परित्यक्ताः। शशकोऽपि हृष्टमनाः सर्व्वमृगान् आनन्द्य तैः सह प्रशस्यमानो यथासुखं तत्र वने निवसति स्म।

---

## २१—योऽनूचानः स नो महान्।

अध्यापयामास पितॄञ्शिशुराङ्गिरसः कविः।
पुत्रका इति होवाच ज्ञानेन परिगृह्य तान् ॥१॥
ते तमर्थमपृच्छन्त देवानागतमन्यवः।
देवाश्चैतान्समेत्योचुर्न्याय्यं वः शिशुरुक्तवान् ॥२॥
अज्ञो भवति वै बालः पिता भवति मन्त्रदः।
अज्ञं हि बालमित्याहुः पितेत्येव तु मन्त्रदम् ॥३॥
न हायनैर्न पलितैर्न वित्तेन न बन्धुभिः।
ऋषयश्चक्रिरे धर्मं योऽनूचानः स नो महान् ॥४॥



विप्राणां ज्ञानतो ज्यैष्ठ्यं क्षत्रियाणां तु वीर्यतः।
वैश्यानां धान्यधनतः शूद्राणामेव जन्मतः ॥५॥
न तेन वृद्धो भवति येनास्य पलितं शिरः।
यो वै युवाप्यधीयानस्तं देवाः स्थविरं विदुः ॥६॥

---

## २२—भोज-लक्ष्मीधर-कुविन्दसम्वादः।

ततः कदाचित् द्वारपालः प्रणम्य भोजं प्राह—"राजन्! द्राविडदेशात् कोऽपि लक्ष्मीधरनामा कविः द्वारमध्यास्ते" इति। राजा—"प्रवेशय" इत्याह। प्रविष्टमेव सूर्य्यमिव विभ्राजमानं चिरादप्यविदितवृत्तान्तं प्रेक्ष्य राजा विचारयामास, आह च—

"आकारमात्रविज्ञानसम्पादितमनोरथाः।
धन्यास्ते ये न शृण्वन्ति दीनाः क्वाप्यर्थिनां गिरः॥"

स चागत्य तत्र राजानं स्वस्ति इत्युक्त्वा तदाज्ञयोपविष्टः प्राह—"देव! इयं ते पण्डितमण्डिता सभा, त्वञ्च साक्षाद्विष्णुरसि, ततः किं नाम पाण्डित्यं मम? तथापि किञ्चिद्वच्मि—

भोजप्रतापन्तु विधाय धात्रा
शेषैर्निरस्तैः परमाणुभिः किम्।
हरेः करेऽभूत् पविरम्बरे च
भानुः पयोधेरुदरे कृशानुः?" ॥ इति।

ततस्तेन परिषच्चमत्कृता । राजा च तस्य प्रत्यक्षरलक्षं ददौ । पुनः कविराह—"देव ! मया सकुटुम्बेनात्र निवासाशया समागतम्—

"क्षमी दाता गुणग्राही स्वामी पुण्येन लभ्यते ।
अनुकूलः शुचिर्दक्षः कविर्विद्वान् सुदुर्लभः ॥" इति ।

ततो राजा मुख्यामात्यं प्राह—"अस्मै गृहं दीयताम्" इति । ततो निखिलमपि नगरं विलोक्य कमपि मूर्खममात्यो नापश्यत्, यं निरस्य विदुषे गृहं दीयते । तत्र सर्वत्र भ्रमन् कस्यचित् कुविन्दस्य गृहं वीक्ष्य कुविन्दं प्राह—"कुविन्द ! गृहान्निःसर, तव गृहं विद्वानेष्यति" इति । ततः कुविन्दो राजभवनमासाद्य राजानं प्रणम्य प्राह—"देव ! भवदमात्यो मां मूर्खं कृत्वा गृहान्निःसारयति; त्वन्तु पश्य, मूर्खोऽहं पण्डितो वेति—

काव्यं करोमि न हि चारुतरं करोमि
यत्नात् करोमि यदि चारुतरं करोमि ।
भूपालमौलिमणिमण्डितपादपीठ !
हे साहसाङ्क ! कवयामि वयामि यामि ॥"

ततो राजा त्वङ्कारवादेन वदन्तं कुविन्दं प्राह—"लखिता ते पदपङ्क्तिः, कवितामाधुर्य्यञ्च शोभनं, परन्तु कवित्वं विचार्य्य वक्तव्यम्" इति । ततः कुपितः कुविन्दः प्राह—"देव ! अत्रोत्तरं भाति किन्तु न वदामि, राजधर्म्मः



पृथक् विद्वद्धर्मात्" इति । राजा प्राह—"अस्ति चेदुत्तरं ब्रूहि" इति । कुविन्दः प्राह—"देव ! कालिदासादृतेऽन्यं कविं न मन्ये, कोऽस्ति ते सभायां कालिदासादृते कवितातत्त्वविद्विद्वान् ?

यत् सारस्वतवैभवं गुरुकृपापीयूषपाकोद्भवं
तल्लभ्यं कविनैव नैव हठतः पाठप्रतिष्ठाजुषाम् ।
कासारे दिवसं वसन्नपि पयःपूरं परं पङ्किलं
कुर्वाणः कमलाकरस्य लभते किं सौरभं सैरिभः ?"

ततो राजा—"साधु भोः ! कुविन्द !" इत्युक्त्वा तस्याक्षरलक्षं ददौ; "मा भैषीः" इति पुनः कुविन्दं प्राह ।

---

## २३—वनगमनाय सीताया आग्रहः ।

सा त्वं वसेह कल्याणि राज्ञः समनुवर्तिनी ।
भरतस्य रता धर्मे सत्यव्रतपरायणा ॥१॥
अहं गमिष्यामि महावनं प्रिये
त्वया हि वस्तव्यमिहैव भामिनि ।
यथा व्यलीकं कुरुषे न कस्यचि-
त्तथा त्वया कार्यमिदं वचो मम ॥२॥
एवमुक्ता तु वैदेही प्रियार्हा प्रियवादिनी ।
प्रणयादेव संक्रुद्धा भर्त्तारमिदमब्रवीत् ॥३॥

किमिदं भाषसे राम वाक्यं लघुतया ध्रुवम् ।
त्वया यदपहास्यं मे श्रुत्वा नरवरोत्तम ॥४॥
वीराणां राजपुत्राणां शस्त्रास्त्रविदुषां नृप ।
अनर्हमयशस्यं च न श्रोतव्यं त्वयेरितम् ॥५॥
आर्यपुत्र पिता माता भ्राता पुत्रस्तथा स्नुषा ।
स्वानि पुण्यानि भुञ्जानाः स्वं स्वं भाग्यमुपासते ॥६॥
भर्तुर्भाग्यं तु नार्येका प्राप्नोति पुरुषर्षभ ।
अतश्चैवाहमादिष्टा वने वस्तव्यमित्यपि ॥७॥
न पिता नात्मजो वात्मा न माता न सखीजनः ।
इह प्रेत्य च नारीणां पतिरेको गतिः सदा ॥८॥
यदि त्वं प्रस्थितो दुर्गं वनमद्यैव राघव ।
अग्रतस्ते गमिष्यामि मृद्नन्ती कुशकण्टकान् ॥९॥
ईर्ष्यां रोषं बहिष्कृत्य भुक्तशेषमिवोदकम् ।
नय मां वीर विस्रब्धः पापं मयि न विद्यते ॥१०॥
प्रासादाग्रे विमानैर्वा वैहायसगतेन वा ।
सर्वावस्थागता भर्तुः पादच्छाया विशिष्यते ॥११॥
अनुशिष्टास्मि मात्रा च पित्रा च विविधाश्रयम् ।
नास्मि संप्रति वक्तव्या वर्तितव्यं यथा मया ॥१२॥
अहं दुर्गं गमिष्यामि वनं पुरुषवर्जितम् ।
नानामृगगणाकीर्णं शार्दूलगणसेवितम् ॥१३॥



सुखं वने निवत्स्यामि यथैव भवने पितुः ।
अचिन्तयन्ती त्रींल्लोकांश्चिन्तयन्ती पतिव्रतम् ॥१४॥
शुश्रूषमाणा ते नित्यं नियता ब्रह्मचारिणी ।
सह रंस्ये त्वया वीर वनेषु मधुगन्धिषु ॥१५॥
त्वं हि कर्तुं वने शक्तो राम संपरिपालनम् ।
अन्यस्यापि जनस्येह किं पुनर्मम मानद ॥१६॥
साहं त्वया गमिष्यामि वनमद्य न संशयः ।
नाहं शक्या महाभाग निवर्तयितुमुद्यता ॥१७॥
फलमूलाशना नित्यं भविष्यामि न संशयः ।
न ते दुःखं करिष्यामि निवसन्ती त्वया सदा ॥१८॥
अग्रतस्ते गमिष्यामि भोक्ष्ये भुक्तवति त्वयि ।
इच्छामि परतः शैलान्पल्वलानि सरांसि च ॥१९॥
द्रष्टुं सर्वत्र निर्भीता त्वया नाथेन धीमता ।
हंसकारण्डवाकीर्णाः पद्मिनीः साधुपुष्पिताः ॥२०॥
इच्छेयं सुखिनी द्रष्टुं त्वया वीरेण संगता ।
अभिषेकं करिष्यामि तासु नित्यमनुव्रता ॥२१॥
सह त्वया विशालाक्ष रंस्ये परमनन्दिनी ।
एवं वर्षसहस्राणि शतं वापि त्वया सह ॥२२॥
व्यतिक्रमं न वेत्स्यामि स्वर्गोऽपि हि न मे मतः ।
स्वर्गेऽपि च विना वासो भविता यदि राघव ।
त्वया विना नरव्याघ्र नाहं तदपि रोचये ॥२३॥

अहं गमिष्यामि वनं सुदुर्गमं
मृगायुतं वानरवारणैश्च ।
वने निवत्स्यामि यथा पितुर्गृहे
तवैव पादावुपगृह्य संमता ॥२४॥
अनन्यभावामनुरक्तचेतसं
त्वया वियुक्तां मरणाय निश्चिताम् ।
नयस्व मां साधु कुरुष्व याचनां
नातो मया ते गुरुता भविष्यति ॥२५॥

## २४—भोज-कालिदासयोः मिलनसंवादः ।

ततो माघे दिवं गते राजा शोकाकुलो विशेषेण कालिदासवियोगेन पण्डितानां प्रवासेन च कृशोऽभूत् दिने दिने बहुलपक्षशशीव । ततोऽमात्यैर्मिलित्वा चिन्तितम्—"वल्लालदेशे कालिदासो वसति, तस्मिन्नागते राजा सुखी भविष्यति" इति । एवं विचार्य्यामात्यैः पत्रे किमपि लिखित्वा तत् पत्रञ्चैकस्यामात्यस्य हस्ते दत्वा प्रेषितम् । स कालक्रमेण कालिदासमासाद्य "राज्ञोऽमात्यैः प्रेषितोऽस्मि" इति नत्वा तत् पत्रं दत्तवान् । ततस्तत् कालिदासो वाचयति—

"न भवति स भवति न चिरं भवति चिरञ्चेत् फले विसंवादी ।
कोपः सत्पुरुषाणां तुल्यः स्नेहेन नीचानाम् ॥



सहकारे चिरं स्थित्वा सलीलं बालकोकिल ! ।
तं हित्वाऽद्यान्यवृक्षेषु विचरन्न विलज्जसे ? ॥
कलकण्ठ ! यथा शोभा सहकारे भवद्गिरः ।
खदिरे वा पलाशे वा किं तथा स्यात् ? विचारय" ॥ इति

ततः कालिदासः प्रभाते तं भूपालमापृच्छ्य मालवदेशमागत्य राज्ञः क्रीडोद्याने तस्थौ । ततो राजा च तत्रागतं ज्ञात्वा स्वयं गत्वा महता परिवारेण तमानीय सम्मानितवान् । ततः क्रमेण विद्वन्मण्डले च समायाते सा भोजपरिषत् प्रागिव रेजे ।

---

## २५—भोज-द्विजवरसंवादः ।

कदाचिद्राजा मृगयारसेन पुरः पलायमानं वराहं दृष्ट्वा स्वयमेकाकितया दूरं वनान्तमासादितवान् । तत्र कञ्चन द्विजवरवलोक्य प्राह—"द्विज ! कुत्र गन्तासि ?" द्विजः—"धारानगरम्" । भोजः—"किमर्थम् ?"। द्विजः—"भोजं द्रष्टुं द्रविणेच्छया, स पण्डिताय दत्ते, अहमपि मूर्खं न याचे" । भोजः—"विप्र ! तर्हि त्वं विद्वान् कविर्वा" । द्विजः—"महाभाग ! कविरहम्" । भोजः—"तर्हि किमपि पठ" । द्विजः—"भोजं विना मत्पदसरणिं न कोऽपि जानाति" । राजा—'ममापि अमरवाणीपरि-

ज्ञानमस्ति, राजा च मयि स्निह्यति, त्वद्गुणश्च श्रावयिष्यामि, किमपि कलाकौशलं दर्शय" । विप्रः—"किं वर्णयामि ?" राजा—"कलमानेतान् वर्णय" । विप्रः—
"कलमाः पाकविनम्राः मूलतलाऽऽघ्रातसुरभिकह्लाराः ।
पवनाऽऽकम्पितशिरसः प्रायः कुर्वन्ति परिमलश्लाघाम्" ॥
राजा तस्मै सर्वाभरणानि उत्तार्य्य ददौ ।

---

## २६—अराजकराष्ट्रस्य दुर्दशाया वर्णनम् ।

नाराजके जनपदे विद्युन्माली महास्वनः ।
अभिवर्षति पर्जन्यो महीं दिव्येन वारिणा ॥ १ ॥
नाराजके जनपदे बीजमुष्टिः प्रकीर्यते ।
नाराजके पितुः पुत्रो भार्या वा वर्तते वशे ॥ २ ॥
अराजके धनं नास्ति नास्ति भार्याप्यराजके ।
इदमत्याहितं चान्यत्कुतः सत्यमराजके ॥ ३ ॥
नाराजके जनपदे कारयन्ति सभां नराः ।
उद्यानानि च रम्याणि हृष्टाः पुण्यगृहाणि च ॥ ४ ॥
नाराजके जनपदे यज्ञशीला द्विजातयः ।
सत्राण्यन्वासते दान्ता ब्राह्मणा संशितव्रताः ॥ ५ ॥
नाराजके जनपदे महायज्ञेषु यज्वनः ।
ब्राह्मणा वसुसम्पूर्णा विसृजन्त्याप्तदक्षिणाः ॥ ६ ॥



नाराजके जनपदे प्रहृष्टनटनर्तकाः ।
उत्सवाश्च समाजाश्च वर्धन्ते राष्ट्रवर्धनाः ॥ ७ ॥
नाराजके जनपदे सिद्धार्था व्यवहारिणः ।
कथाभिरभिरज्यन्ते कथाशीलाः कथाप्रियैः ॥ ८ ॥
नाराजके जनपदे तूद्यानानि समागताः ।
सायाह्ने क्रीडितुं यान्ति कुमार्यो हेमभूषिताः ॥ ९ ॥
नाराजके जनपदे धनवन्तः सुरक्षिताः ।
शेरते विवृतद्वाराः कृषिगोरक्षजीविनः ॥१०॥
नाराजके जनपदे वाहनैः शीघ्रवाहिभिः ।
नरा निर्यान्त्यरण्यानि नारीभिः सह कामिनः ॥११॥
नाराजके जनपदे बद्धघण्टा विषाणिनः ।
अटन्ति राजमार्गेषु कुञ्जराः षष्टिहायनाः ॥१२॥
नाराजके जनपदे शरान्संततमस्यताम् ।
श्रूयते तलनिर्घोष इष्वस्त्राणामुपासने ॥१३॥
नाराजके जनपदे वणिजो दूरगामिनः ।
गच्छन्ति क्षेममध्वानं बहुपण्यसमाचिताः ॥१४॥
नाराजके जनपदे चरत्येकचरो वशी ।
भावयन्नात्मनात्मानं यत्रसायंगृहो मुनिः ॥१५॥
नाराजके जनपदे योगक्षेमः प्रवर्तते ।
न चाप्यराजके सेना शत्रून्विषहते युधि ॥१६॥

नाराजके जनपदे हृष्टैः परमवाजिभिः ।
नराः संयान्ति सहसा रथैश्च प्रतिमण्डिताः ॥१७॥
नाराजके जनपदे नराः शास्त्रविशारदाः ।
संवदन्तोपतिष्ठन्ते वनेषूपवनेषु वा ॥१८॥
नाराजके जनपदे माल्यमोदकदक्षिणाः ।
देवताभ्यर्चनार्थाय कल्प्यन्ते नियतैर्जनैः ॥१९॥
नाराजके जनपदे चन्दनागुरुरूषिताः ।
राजपुत्रा विराजन्ते वसन्ते इव शालिनः ॥२०॥
यथा ह्यनुदका नद्यो यथा वाप्यतृणं वनं ।
अगोपाला यथा गावस्तथा राष्ट्रमराजकम् ॥२१॥
ध्वजो रथस्य प्रज्ञानं धूमो ज्ञानं विभावसोः ।
तेषां यो नो ध्वजो राजा स देवत्वमितो गतः ॥२२॥
नाराजके जनपदे स्वकं भवति कस्यचित् ।
मत्स्या इव जना नित्यं भक्षयन्ति परस्परम् ॥२३॥
ये हि संभिन्नमर्यादा नास्तिकाश्छिन्नसंशयाः ।
तेऽपि भावाय कल्पन्ते राजदण्डनिपीडताः ॥२४॥
यथा दृष्टिः शरीरस्य नित्यमेव प्रवर्तते ।
तथा नरेन्द्रो राष्ट्रस्य प्रभवः सत्यधर्मयोः ॥२५॥
राजा सत्यं च धर्मश्च राजा कुलवतां कुलम् ।
राजा माता पिता चैव राजा हितकरो नृणाम् ॥२६॥



यमो वैश्रवणः शक्रो वरुणश्च महाबलः ।
विशिष्यन्ते नरेन्द्रेण वृत्तेन महता ततः ॥२७॥
अहो तम इवेदं स्यान्न प्रज्ञायेत किंचन ।
राजा चेन्न भवेल्लोके विभजन्साध्वसाधुनी ॥२८॥

---

## २७—रक्षोभीतिवारणम् ।

अथ भोजे समाचङ्क्रम्यमाणे सिंहासनं पुत्तलिकाऽन्या कथयति—"भो राजन्! श्रूयताम् । विक्रमे राज्यं कुर्वति भूमण्डले पिशुनः तस्करश्च पापकर्मनिरतो नासीत् । अन्यच्च, यस्य राज्ञः सदा राज्यभारचिन्ता बलवद्वैरिविजयचिन्ता च अस्ति स रात्रौ निद्रामपि नाधिगच्छति । उक्तश्च—

अर्थातुराणां न पिता न बन्धुः
कामातुराणां न भयं न लज्जा ।
चिन्तातुराणां न सुखं न निद्रा
क्षुधातुराणां न बलं न तेजः ॥

अयं विक्रमादित्यो राजा तथाविधो न भवति । सर्वान् अर्थिभूभुजः स्वपादपद्माश्रितान् विधाय आज्ञाप्रदानेन राज्यं करोति ।

एकदा स राज्य-भारं मन्त्रिषु निधाय स्वयं योगिवेशेन

देशान्तरं निर्गतः। यत्राऽऽत्मनश्चित्तस्य सुखं भवति तत्र कतिचिद्दिनानि तिष्ठति, यत्राश्चर्य्यं पश्यति तत्रापि कालं नयति।

एवं पर्य्यटन् स एकस्मिन् दिवसे यदा महाऽरण्यमध्ये प्राविशत्, तदा सूर्य्योऽस्तं गतः। तद् दृष्ट्वा राजा वृक्षमूलमेकमाश्रित्य रात्रौ स्थितः। तस्य वृक्षस्योपरि वृद्धः चिरञ्जीविनामा कश्चित् पक्षिराज आसीत्। तस्य पुत्राः पौत्राश्च देशान्तरं गत्वा स्वोदरपूरणं विधाय, सायंकाले प्रत्येकमेकैकं फलमादाय, वृद्धाय तस्मै चिरञ्जीविने प्रतिदिनं प्रयच्छन्ति।

ततो रात्रौ चिरञ्जीवी सुखेनोपविष्टस्तान् पक्षिणः अपृच्छत्।—राजाऽपि वृक्षमूले स्थितस्तद्वचः शृणोति।—"भोः पुत्राः! युष्माभिर्नानादेशान् पर्य्यटद्भिः किं चित्रं दृष्टम्?" तत्रैकेन पक्षिणा भणितम्—"मया किमप्याश्चर्यं न दृष्टम्; परम् अद्य मम चेतसि महादुःखं भवति"। चिरञ्जीविनोक्तम्—"तत् कथय किं निमित्तं दुःखम्"। तेनोक्तम्—"केवलं कथनेन किं भवति?" वृद्धेनोक्तम्—"भोः पुत्र! यो दुःखी, स सुहृदि दुःखं निवेद्य सुखी भवति"।

तस्य वाक्यं श्रुत्वा स दुःखकारणं कथयति—"भोः तात! श्रूयताम्। अस्ति उत्तरदेशे शैवालघोषो नाम पर्वतः। तत्पर्वतसमीपे पलाशनगरमस्ति। तस्मिन् पर्वते स्थितः कश्चित् राक्षसः प्रतिदिनं नगरमागत्य सम्मुखागतं



यं कञ्चन मानुषं स्त्रियं बालकादिकं वा पर्वते नीत्वा भक्षयति। एकदा स नगरवासिभिः जनैः उक्तः—"भो बकासुर! त्वं यथेच्छं सम्मुखपतितं यं कमेवं मा भक्षय, वयं तुभ्यं प्रतिदिनमाहारार्थम् एकं मानवं दास्यामः"। तद्वचः तेनाङ्गीकृतम्।

तदनन्तरं तत्रत्यो जनः प्रतिदिनं गृहक्रमेणैकैकं मानुषं तस्मै प्रयच्छति। एवं महान् कालो गतः। अद्य पूर्व्वजन्मनि सञ्जातसौहार्दस्य मम मित्रस्य कस्यचित् ब्राह्मणस्य वारः समायातः; तस्यैक एव पुत्रः। पुत्रं ददाति चेत्, सन्ततिच्छेदो भविष्यति; आत्मानं प्रयच्छति चेत्, भार्या विधवा भविष्यति; वैधव्यं पुनर्महादुःखम्। पत्नीं दास्यति चेत्, आश्रमभ्रंशो भवति। तेषां दुःखेनाहं महादुःखी। इति मम महद् दुःखकारणम्"।

तस्य वचनं श्रुत्वा तत्रत्यैः पक्षिभिर्भणितम्—"अहो! अयमेव सुहृत्, यः सुहृदो दुःखेन स्वयं दुःखी भवति। एतदेव मित्रत्वम्"।

इति पक्षिणो वचः श्रुत्वा विहङ्गरवार्थविद् राजा तत्र नगरे वध्यशिलासमीपे गतः। तत्र ब्राह्मणं निरीक्ष्य, अभयं दत्वा, स्वगृहं सम्प्रेष्य च, तत्समीपस्थे सरोवरे स्नात्वा वध्यशिलायामुपविष्टः।

तस्मिन् समये राक्षसः समागत्य, प्रहसितवदनं पुरुषं

दृष्ट्वा विस्मितस्तं वदति—"भो महासत्त्व ! अत्र शिलायां प्रतिदिनं यः उपविशति, स मदागमनात् पूर्वमेव म्रियते । त्वं पुनः महाधैर्य्यसम्पन्नः प्रहसितवदनो दृश्यसे । यस्य मरणकालः समायाति, तस्येन्द्रियाणि ग्लानिं प्राप्नुवन्ति; त्वं पुनरधिकां कान्तिं प्राप्य प्रहससि । तर्हि कथय को भवान्" इति । राजा भणति—"मया परार्थमेतच्छरीरं दीयते स्वेच्छया, अतो न मे कापि ग्लानिः; यद् भवतु, किमनेन विचारेण तव ? त्वमात्मनः समीहितं कुरु" ।

तदा राक्षसेन स्वमनसि विचारितम्—"अहो ! साधुरयं, यः आत्मनः सुखभोगेच्छां विहाय परदुःखेन दुःखी भूत्वा अत्र एति" ।

एवं विचार्य्य स राजानमब्रवीत्—"भो महापुरुष ! त्वं सर्व्वस्यार्त्तिहरो गुरुः, यतः त्वं विश्वस्यार्त्तिं परिहरसि । परार्थे शरीरं प्रयच्छतस्तवैव एतच्छरीरं श्लाघ्यम् । कुतः—

पशवोऽपि हि जीवन्ति केवलं स्वोदरम्भराः ।
तस्यैव जीवितं श्लाघ्यं यः परार्थे हि जीवति ॥

भवादृशां परोपकारिणामेतच्चित्रं न भवति । तथा चोक्तम्—

किमत्र चित्रं ? यत् सन्तः परानुग्रहतत्पराः ।
न हि स्वदेहशैत्याय जायन्ते चन्दनद्रुमाः ॥

भो महासत्त्व ! अनेनैव परोपकारेण त्वं सर्वाः सम्पदः प्राप्नोषि । यदुक्तम्—



परोपकारव्यापारः पुरुषो यः प्रजायते ।
सम्पदं स समाप्नोति परत्राऽपि परं पदम् ॥

एवं भणित्वा पुनः राजानमब्रवीत्—"भो महासत्त्व ! तवाहं तुष्टोऽस्मि, वरं वृणीष्व" । राज्ञोक्तम्—"भो राक्षस ! त्वं यदि मम प्रसन्नोऽसि, तर्ह्यद्यप्रभृति मनुष्यभक्षणं परित्यज । अन्यमपि मया अभिधीयमानमुपदेशं शृणु ।

यथात्मनः प्रियाः प्राणाः सर्वेषां प्राणिनां तथा ।
तस्मान्मृत्युभयात् तेऽपि त्रातव्याः प्राणिनो बुधैः ॥

अन्यच्च । मरिष्यामीति यद् दुःखं पुरुषस्योपजायते ।
शक्यते नानुमानेन तद् वक्तुं केनचित् क्वचित् ॥

तथा च । यथा भवेज्जीवितमात्मनः प्रियं
तथा परेषामपि जीवितं प्रियम् ।
निरीक्ष्यते जीवितमात्मनो यथा
तथा परेषामपि रक्ष जीवितम् ॥"

राज्ञा इति निरूपितः राक्षसः तदाप्रभृति जीवमारणं तत्याज । राजा च स्वनगरीं प्रत्यगात् ।

इमां कथां कथयित्वा पुत्तलिका भोजराजं प्रति अब्रवीत्—"त्वयि एवं परोपकारदयादयः गुणाः विद्यन्ते चेत्, तर्हि अस्मिन् सिंहासने समुपविश" । राजा तूष्णीमासीत् ।

———

## २८—कौसल्याभरतयोः संवादः ।

ततः शत्रुघ्नभरतौ कौसल्यां प्रेक्ष्य दुःखितौ ।
पर्यष्वजेतां दुःखार्तां पतितां नष्टचेतनाम् ॥१॥
रुदन्तौ रुदती दुःखात्समेत्यार्या मनस्विनी ।
भरतं प्रत्युवाचेदं कौसल्या भृशदुःखिता ॥२॥
इदं ते राज्यकामस्य राज्यं प्राप्तमकण्टकम् ।
संप्राप्तं बत कैकेय्या शीघ्रं क्रूरेण कर्मणा ॥३॥
प्रस्थाप्य चीरवसनं पुत्रं मे वनवासिनम् ।
कैकेयी कं गुणं तत्र पश्यति क्रूरदर्शिनी ॥४॥
क्षिप्रं मामपि कैकेयी प्रस्थापयितुमर्हति ।
हिरण्यनाभो यत्रास्ते सुतो मे सुमहायशाः ॥५॥
कामं वा स्वयमेवाद्य तत्र मां नेतुमर्हसि ।
यत्रासौ पुरुषव्याघ्रस्तप्यते मे सुतस्तपः ॥६॥
इदं हि तव विस्तीर्णं धनधान्यसमाचितम् ।
हस्त्यश्वरथसम्पूर्णं राज्यं निर्यातितं तया ॥७॥
इत्यादिबहुभिर्वाक्यैः क्रूरैः संभर्त्सितोऽनघः ।
विव्यथे भरतो तीव्रव्रणे तुद्येव सूचिना ॥८॥
पपात चरणौ तस्यास्तदा संभ्रान्तचेतनः ।
विलप्य बहुधाऽसंज्ञो लब्धसंज्ञस्तदाभवत् ॥९॥





एवं विलपमानां तां प्राञ्जलिर्भरतस्तदा ।
कौसल्यां प्रत्युवाचेदं शोकैर्बहुभिरावृताम् ॥१०॥
आर्ये कस्मादजानन्तं गर्हसे मामकल्मषम् ।
विपुलां च मम प्रीतिं स्थितां जानासि राघवे ॥११॥
कृतशास्त्रानुगा बुद्धिर्मा भूत्तस्य कदाचन ।
सत्यसंधः सतां श्रेष्ठो यस्यार्योऽनुमते गतः ॥१२॥
प्रैष्यं पापीयसां यातु सूर्यं च प्रति मेहतु ।
हन्तु पादेन गां सुप्तां यस्यार्योऽनुमते गतः ॥१३॥
कारयित्वा महत्कर्म भर्ता भृत्यमनर्थकम् ।
अधर्मो योऽस्य सोऽस्यास्तु यस्यार्योऽनुमते गतः ॥१४॥
हस्त्यश्वरथसंबाधे युद्धे शस्त्रसमाकुले ।
मा स्म कार्षीत्सतां धर्मं यस्यार्योऽनुमते गतः ॥१५॥
उपदिष्टं सुसूक्ष्मार्थं शास्त्रं यत्नेन धीमता ।
स नाशयतु दुष्टात्मा यस्यार्योऽनुमते गतः ॥१६॥
गवां स्पृशतु पादेन गुरून्परिवदेत च ।
मित्रे द्रुह्येत सोऽत्यर्थं यस्यार्योऽनुमते गतः ॥१७॥
विश्वासात्कथितं किञ्चित्परिवादं मिथः क्वचित् ।
विवृणोतु स दुष्टात्मा यस्यार्योऽनुमते गतः ॥१८॥
अकर्ता चाकृतज्ञश्च त्यक्तश्च निरपत्रपः ।
लोके भवतु विद्विष्टो यस्यार्योऽनुमते गतः ॥१९॥

पुत्रैर्दासैश्च भृत्यैश्च स्वगृहे परिवारितः ।
स एको मृष्टमश्नातु यस्यार्योऽनुमते गतः ॥२०॥
अप्राप्य सदृशान्दारानिनपत्यः प्रमीयताम् ।
अनवाप्य क्रियां धर्म्यां यस्यार्योऽनुमते गतः ॥२१॥
मात्मनः संततिं द्राक्षीत्स्वेषु दारेषु दुःखितः ।
आयुः समग्रमप्राप्य यस्यार्योऽनुमते गतः ॥२२॥
राजस्त्रीबालवृद्धानां वधे यत्पापमुच्यते ।
भृत्यत्यागे च यत्पापं तत्पापं प्रतिपद्यताम् ॥२३॥
संग्रामे समुपोढे च शत्रुपक्षभयंकरे ।
पलायमानो बध्येत यस्यार्योऽनुमते गतः ॥२४॥
मास्य धर्मे मनो भूयादधर्मं स निषेवताम् ।
अपात्रवर्षी भवतु यस्यार्योऽनुमते गतः ॥२५॥
उभे संध्ये शयानस्य यत्पापं परिकल्प्यते ।
तच्च पापं भवेत्तस्य यस्यार्योऽनुमते गतः ॥२६॥
देवतानां पितॄणां च मातापित्रोस्तथैव च ।
मा स्म कार्षीत्स शुश्रूषां यस्यार्योऽनुमते गतः ॥२७॥
सतां लोकात्सतां कीर्त्याः सज्जुष्टात्कर्मणस्तथा ।
भ्रश्यतु क्षिप्रमद्यैव यस्यार्योऽनुमते गतः ॥२८॥
पानीयदूषके पापं तथैव विषदायके ।
यत्तदेकः स लभतां यस्यार्योऽनुमतो गतः ॥२९॥



तृषार्ते सति पानीये विप्रलम्भेन योजयन् ।
यत्पापं लभते तत्स्याद्यस्यार्योऽनुमते गतः ॥३०॥
एवमाश्वासयन्नेव दुःखार्तोऽनुपपात ह ।
विहीनां पतिपुत्राभ्यां कौसल्यां पार्थिवात्मजः ॥३१॥
तदा तं शपथैः कष्टैः शपमानमचेतनम् ।
भरतं शोकसंतप्तं कौसल्या वाक्यमब्रवीत् ॥३२॥
मम दुःखमिदं पुत्र भूयः समुपजायते ।
शपथैः शपमानो हि प्राणानुपरुणत्सि मे ॥३३॥
दिष्ट्या न चलितो धर्मादात्मा ते सहलक्षणः ।
वत्स सत्यप्रतिज्ञो हि सतां लोकानवाप्स्यसि ॥३४॥

---

## २९—बलिसंदर्शनोपाख्यानम् ।

पुनरपि राजा यावत् सिंहासनम् अधितिष्ठासुर्याति तावदन्या पुत्तलिका तं निवार्य्याऽवदत्—"भो राजन् तव विक्रमस्येव औदार्य्यादिगुणाः सन्ति चेत्, तर्हि स्मिन् सिंहासने समुपविश"। राज्ञोक्तम्—"भोः पुत्तलिके ! कथय तस्य विक्रमस्यौदार्य्यादिगुणवृत्तान्तम्"। सा कथयति—"श्रूयतां राजन् ! विक्रमे सुमहद् भूमण्डलं शासति सर्वेऽपि लोकाः आनन्दपरिपूर्णहृदयाः आसन । ब्राह्मणाः षट्कर्म्मनिरताः, स्त्रियः पतिव्रताः, शतायु षः

पुरुषाः, सदाफलाः वृक्षाः, कामवर्षी पर्जन्यः, मही सर्वदा सम्पूर्णशस्यशालिनी, सर्वेषां लोकानां पापाद् भयम्, अतिथीनां पूजा, जीवेषु दया, गुरूणां सेवा, सर्वदा दीनेभ्यो दानञ्च, एवं प्रजासु वृत्तिः आसीत्।

अथ एकदा विक्रमः सिंहासने उपविष्टः आसीत्। तत्र सभायामुपविष्टाः नानादेशीयाः सामन्तराजकुमाराः आसन्। तेषु केचित् स्तुतिपाठकैः स्ववंशावलीः पाठयन्ति, केचनोद्धताः स्वभुजबलं स्वयमेव स्तुवन्ति, केचन षड्विध-दण्डायुधसाधनाभिज्ञाः श्मश्रुलाः युवानः अन्योऽन्यम् उपहसन्ति, केचन शरणाऽऽगतपरिपालनप्रवणाः, एके च परत्र विषये ससाधनाः, केचन च धर्म्मसङ्ग्रहकारिणः इति।

अत्रान्तरे कश्चित् पापर्द्धिः व्याधः तत्र समागत्य राजानं प्रणम्याऽवदत्—"भो देव! अरण्यमध्ये अञ्जन-पर्वताकारः महान् वराहः समागतोऽस्ति, तं देवः समागत्य पश्यतु"।

तस्य वचनं श्रुत्वा राजा तैरेव राजकुमारैः सह वनं गत्वा नदीतटस्थितनिकुञ्जान्तर्गतं वराहमेकमपश्यत्। ततोऽसौ वराहोऽपि वीराणां कोलाहलं श्रुत्वा तस्मान्निकुञ्जात् बहिर्निर्गतः। तदनन्तरं सर्वैः राजकुमारैः सह महत् स्वहस्त-कौशलं दर्शयतः विक्रमस्य षड्विंशत्याऽऽयुधानि तस्योपरि निपेतुः। वराहस्तु तान्यायुधानि अगणयन्, पर्वतान्तर्गतं



कश्चित् कन्दरं विवेश। राजाऽपि तस्य पृष्ठतो लग्नः पर्वतमगमत्। तत्र काञ्चन बिलद्वारं दृष्ट्वा, स्वयमेव तत्र प्रविष्टो महत्यन्धकारे कियद्दूरं गतः। उत्तरत्र महान् प्रकाशः अभूत्।

ततः कियद्दूरे सुवर्णमयप्राकारं शुभ्राऽभ्रंलिहप्रासाद-विशिष्टं नगरमेकम् अपश्यत्। तत्र च देवालयोपवनादि-भिरलङ्कृते समस्तवस्तुपरिपूर्णविपणिभूषिते धनिकलोक-समाकीर्णे नानाविलासिजनसेव्यमानं विलासिनीजनम् अतिमनोहरमपश्यत्। तत्र प्रविश्य विपणिमध्ये यावत् प्रविशति, तावदतीव मनोहरमण्डपयुतं राजभवनमेकम-पश्यत्। तत्र विरोचनसुतो बलिः राज्यं करोति। राजा राजभवने प्रविष्ट एव बलिना झटिति समागत्य आलिङ्गितः, अतिरमणीये सिंहासने च समुपवेशितः, पृष्टश्च—"भोः स्वामिन्! कुतोऽत्र भवतः समागतिः?" विक्रमेणोक्तम्—"अहं भवत्सन्दर्शनार्थमत्र समागतोऽस्मि"। तच्छ्रुत्वा बलिः राजानमवदत्—"अद्य मम सन्ततिः पवित्रीभूता, सफला च जाता। बहुना पुण्योदयेन भवतोऽस्माकं गृहे समागतिः संवृत्ता"।

विक्रमेणोक्तम्—"भो राजन्! त्वं पवित्रीभूतान्तः-करणः, तवैव जन्म श्लाघ्यं, यतः साक्षाद्वैकुण्ठाधिपो नारायणस्तव मन्दिरे सदा विराजते"। अथ बलिनोक्तम्—

"स्वामिन् ! भवतः किमागमनकारणम् अन्यत् ?" विक्रमेणोक्तम्—"भो दानवेन्द्र ! अहं भवद्दर्शनार्थमेव समागतोऽस्मि, अत्र नान्यत् किमपि कारणम्"। अथ बलिनोक्तम्—"यदि मां प्रियसुहृद् मन्यमानेन स्वामिना समागतं, तर्हि मयि कृपापरवशेन किमपि वस्तु भवता याचनीयम्"। ततो विक्रमेणोक्तम्—"मम किमपि न्यूनं नास्ति, तव प्रसादात् सर्वत्र सम्पूर्णोऽस्मि"। बलिनोक्तम्—"भोः स्वामिन् ! भवतः किमपि न्यूनमिति न मयोच्यते, किन्तु मैत्रीम् उद्दिश्य किञ्चिद् दित्सामि।
उक्तञ्च—नोपकारं विना प्रीतिः कदाचित् कस्य जायते।
उपयाचितदानेन पश्य देवा ह्यभीष्टदाः॥

एवं भणित्वा तेन विक्रमाय राज्ञे रसायनं रसश्च दत्तः। ततः राजा तस्मादनुज्ञां प्राप्य विलात् निर्गतोऽश्वमारुह्य यावद्राजमार्गे समायाति, तावत् महादैन्ययुतः पीडितः सपुत्रः कश्चित् वृद्धब्राह्मणः समागत्याशिषमुक्त्वा राजानमकथयत्—" भो यजमान ! अहम् अत्यन्तदरिद्रः पीडितः बहुकुटुम्बी ब्राह्मणः। अद्य सकुटुम्बस्य मम किमपि भोजनपर्याप्तं धनं देहि ; महत्या क्षुधा पीडिता वयम्"। तदाकर्ण्य राज्ञा भणितम्—"भो ब्राह्मण ! इदानीं मम हस्ते किमपि धनं नास्ति, परं रसश्च रसायनञ्चेति वस्तुद्वयमस्ति। अस्य रसस्य सम्पर्केण सप्तधातवः



सुवर्णानि भवन्ति ; तथा इदं रसायनं यस्तु सेवते स जरामरणरहितो भवति। त्वमेतयोरुभयोर्मध्ये एकं गृहाण"। तदा पित्रा उक्तम्—"यस्य रसायनस्य सेवनेन जरामरणरहितो भविष्यामि तद्दीयताम्"। एवमात्मनोऽनभिप्रेतं पितुः प्रार्थनमाकर्ण्य पुत्रेणोक्तम्—"किं क्रियते रसायनेन ? तेन जरामरणरहितेनाऽपि पुनर्दारिद्र्यमेवानुभवितव्यम्। यस्य रसस्य सम्पर्के सति रजतादि सुवर्णं भवति स एव ग्राह्यः" इत्युभयोर्विवादो जातः। ततः राजा उभयोर्विवादं श्रुत्वा रसं रसायनञ्चेत्युभयमेव ताभ्यां ददौ। ततो ब्राह्मणः सपुत्रो हृष्टः राजानं वर्णयन् निजनिलयं गतः। राजाऽपि निजवनमगमत्"।

इमां कथां कथयित्वा पुत्तलिका पुनरब्रवीत्—"भो राजन् ! त्वयि एवं धैर्य्यम् औदार्य्यञ्च विद्यते चेत् तर्हि अस्मिन् सिंहासने उपविश"। राजा तूष्णीमासीत्।

---

## ३०—रामकृतं भरतस्य सान्त्वनम्।

तमेवं दुःखितं प्रेक्ष्य विलपन्तं यशस्विनम्।
रामः कृतात्मा भरतं समाश्वासयदात्मवान्॥ १॥
नात्मनः कामकारो हि पुरुषोऽयमनीश्वरः।
इतश्चेतरतश्चैनं कृतान्तः परिकर्षति॥ २॥

सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः ।
संयोगा विप्रयोगान्ता मरणान्तं च जीवितम् ॥ ३ ॥
यथा फलानां पक्वानां नान्यत्र पतनाद्भयम् ।
एवं नरस्य जातस्य नान्यत्र मरणाद्भयम् ॥ ४ ॥
यथागारं दृढस्थूणं जीर्णं भूत्वोपसीदति ।
तथावसीदन्ति नरा जरामृत्युवशं गताः ॥ ५ ॥
अत्येति रजनी या तु सा न प्रतिनिवर्तते ।
यात्येव यमुना पूर्णं समुद्रमुदकार्णवम् ॥ ६ ॥
अहोरात्राणि गच्छन्ति सर्वेषां प्राणिनामिह ।
आयूंषि क्षपयन्त्याशु ग्रीष्मे जलमिवांशवः ॥ ७ ॥
आत्मानमनुशोच त्वं किमन्यमनुशोचसि ।
आयुस्तु हीयते यस्य स्थितस्याथ गतस्य च ॥ ८ ॥
सहैव मृत्युर्व्रजति सह मृत्युर्निषीदति ।
गत्वा सुदीर्घमध्वानं सह मृत्युर्निवर्तते ॥ ९ ॥
गात्रेषु वलयः प्राप्ताः श्वेताश्चैव शिरोरुहाः ।
जरया पुरुषो जीर्णः किं हि कृत्वा प्रभावयेत् ॥ १० ॥
नन्दन्त्युदित आदित्ये नन्दन्त्यस्तमितेऽहनि ।
आत्मनो नावबुध्यन्ते मनुष्या जीवितक्षयम् ॥ ११ ॥
हृष्यन्त्यृतुमुखं दृष्ट्वा नवं नवमिवागतम् ।
ऋतूनां परिवर्तेन प्राणिनां प्राणसंक्षयः ॥ १२ ॥



यथा काष्ठं च काष्ठं च समेयातां महार्णवे ।
समेत्य तु व्यपेयातां कालमासाद्य कंचन ॥ १३ ॥
एवं भार्याश्च पुत्राश्च ज्ञातयश्च वसूनि च ।
समेत्य व्यवधावन्ति ध्रुवो ह्येषां विनाभवः ॥ १४ ॥
नात्र कश्चिद्यथाऽभावं प्राणी समतिवर्तते ।
तेन तस्मिन्न सामर्थ्यं प्रेतस्यास्त्यनुशोचतः ॥ १५ ॥
यथा हि सार्थं गच्छन्तं ब्रूयात्कश्चित्पथि स्थितः ।
अहमप्यागमिष्यामि पृष्ठतो भवतामिति ॥ १६ ॥
एवं पूर्वैर्गतो मार्गः पैतृपितामहैर्ध्रुवः ।
तमापन्नः कथं शोचेद्यस्य नास्ति व्यतिक्रमः ॥ १७ ॥
वयसः पतमानस्य स्रोतसो वाऽनिवर्तिनः ।
आत्मा सुखे नियोक्तव्यः सुखभाजः प्रजाः स्मृताः ॥ १८ ॥
धर्मात्मा सुशुभैः कृत्स्नैः क्रतुभिश्चाप्तदक्षिणैः ।
न स शोच्यः पिता तात स्वर्गतः सत्कृतः सताम् ॥ १९ ॥
स जीर्णमानुषं देहं परित्यज्य पिता हि नः ।
दैवीमृद्धिमनुप्राप्तो ब्रह्मलोकविहारिणीम् ॥ २० ॥
तं तु नैवंविधः कश्चित्प्राज्ञः शोचितुमर्हति ।
त्वद्विधो मद्विधश्चापि श्रुतवान्बुद्धिमत्तरः ॥ २१ ॥
एते बहुविधाः शोका विलापरुदिते तथा ।
वर्जनीया हि धीरेण सर्वावस्थासु धीमता ॥ २२ ॥

---

## ३१—योगिसंदर्शनोपाख्यानम् ।

पुनरपि राजा यावत् सिंहासने समुपवेष्टुम् उपक्रमते, तावदन्या पुत्तलिकाऽब्रवीत्—"भो राजन् ! यदि त्वयि विक्रमस्येव औदार्य्यादयः गुणाः सन्ति, तदा सिंहासने समुपविश"। राजा अवदत्—"भोः पुत्तलिके ! कथय तस्य विक्रमस्यौदार्य्यादीन् गुणान्"।

पुत्तलिका अवदत्—"श्रूयतां राजन्। विक्रमो राजा षण्मासान् राज्यं करोति, षण्मासान् देशान्तरेषु भ्रमति। एकदा देशान्तरगतो नानादेशान् परिभ्रमन् पद्मालयं नाम नगरमगमत्। तत्र सुमनोहरे बहिरुद्याने अतिविमलोदकं कश्चित् सरोवरं दृष्ट्वा तत्रोदकपानं कृत्वा उपविष्टः। ततोऽन्यतः अन्येऽपि केचन वैदेशिकाः समागत्य जलपानं विधाय तत्र उपविष्टाः परस्परं गोष्ठीरकुर्वन्—"अहो ! अस्माभिरनेके देशाः दृष्टाः, बहूनि तीर्थस्थानानि पर्य्यटितानि, अतिदुर्गमाः कैरप्यनधिगम्याः पर्वताश्च आरूढाः, परमेकत्राऽपि महापुरुषदर्शनं नाभूत्" इति। तत्र एकेन भणितम्—"कथं महापुरुषदर्शनं भविष्यति ? यत्र महासिद्धोऽस्ति तत्र गन्तुं न शक्यते; यतः तत्रत्यो मार्गोऽतिदुर्गमः, मध्ये च अनेके विघ्नाः सम्भवन्ति, देहस्य नाशः सम्भाव्यते। येनोद्यमेन प्रथममात्मविनाशशङ्का सञ्जायते तस्य फलं को वा अनुभवितुमिच्छति ? यतः बुद्धिमता सर्वथा आत्मैव प्रथमं रक्षणीयः। उक्तञ्च—

पुनर्दाराः पुनर्वित्तं पुनः क्षेत्रं तथैव च।
पुनः शुभाशुभं कर्म्म शरीरं न पुनः पुनः॥

तस्मात् विवेकिना पुरुषेण आत्माऽहितकराणि कार्य्याणि न कर्त्तव्यानि। तथा चोक्तम्—

व्यसनानि दुरन्तानि सम्यग्व्ययफलानि च।
अशक्यानि च कार्य्याणि नारभेत विचक्षणः॥

तथाच-पर्वतं विषमं घोरं बहुव्यालसमाकुलम्।
नाऽऽरोहेन्मानवः प्राज्ञः संशये हि कदाचन"॥

अथ राजा तेषामेवं वचनं समाकर्ण्य भणति—"अहो वैदेशिक ! किमेवमुच्यते !! यदा पुरुषेण पौरुषं साहसञ्च क्रियते, तदा तस्य किमपि कार्यं दुष्करं न भवति। उक्तञ्च—दुष्प्राप्याणि च वस्तूनि लभ्यन्ते वाञ्छितानि च।
पुरुषैः संशयाऽऽरूढैरलसैर्न कदाचन॥"

एतद्राजवचनं श्रुत्वा तैः उक्तम्—"महासत्त्व ! किं कार्य्यं तत् कथय"। राज्ञोक्तम्—"अस्मात् स्थानात् द्वादशयोजनपर्य्यन्तं यदि गम्यते, तर्हि तत्र महाऽरण्यमध्ये विषमः कश्चित् पर्वतोऽस्ति, तदुपरि त्रिकालनाथो नाम योगीश्वरो विद्यते। यदि तस्य दर्शनं क्रियते, तर्हि स सर्वं

वाञ्छितमर्थं दास्यति; अहं तत्र गच्छामि"। तैरुक्तम्—"वयमप्यागमिष्यामः"।

राज्ञोक्तम्—"सुखेन आगच्छत"।

ततस्ते राज्ञा सह निर्गताः महाऽरण्ये मार्गमतिविषमं दृष्ट्वा राजानं प्रोचुः—"भो महासत्त्व ! कियद्दूरे पर्वतोऽस्ति ?"। राज्ञोक्तम्—"इतः अष्टयोजनदूरे विद्यते"। तैरुक्तम्—"यद्यपि महद्दूरमेतत्, मार्गोऽप्यतिविषमः, तथाऽपि वयं गमिष्यामः" इति ब्रुवन्तः षड्योजनानि अतिक्रम्य पुरतो यावत् गच्छन्ति, तावन्महाकालवदनः विषाग्निमुद्वमन् अतिभयङ्करः कश्चित् सर्पो मार्गमावृत्य तिष्ठति, इति दृष्ट्वा ते सभयाः पलायाञ्चक्रिरे।

राजा तथाऽपि मार्गे गन्तुं प्रवृत्तः। अथ सर्पः समागत्य राजानं वेष्टयित्वा समदशत्। ततः स विषवद् दष्टस्थानं वस्त्रखण्डेन बद्ध्वा, विषज्वालासमन्वितोऽपि ससर्पः दुर्गमं पर्वतमारुह्य त्रिकालनाथं योगिनं दृष्ट्वा नमश्चकार। योगिसन्दर्शनमात्रेण स सर्पस्तं त्यक्त्वा गतः, राजाऽपि सत्वरं निर्विषो बभूव। ततो योगिनोक्तम्—"भो महासत्त्व ! महाप्रमादभूयिष्ठम् एवममानुषं स्थानम् अतिकष्टेन किमर्थमागतोऽसि ?" राज्ञोक्तम्—"भोः स्वामिन् ! अहं तव सन्दर्शनार्थम् आगतोऽस्मि"। योगिनोक्तम्—"महत् कष्टम् अनुभूतं खलु त्वया"। राज्ञोक्तम्—"किमपि कष्टं



नास्ति, भवत्सन्दर्शनमात्रेण सकलमपि पातकं गतम्। ईदृक् क्लेशं स्वीकृत्य अद्याऽहं धन्योऽस्मि, यतो महान्तो हि अतीव दुर्लभदर्शनाः, सकृदपि तैः सङ्गतिः आत्मोन्नतिजननी, महताऽपि विकारहेतुना ते खलु नान्यथाप्रकृतयः। तथा चोक्तम्—

घृष्टं घृष्टं पुनरपि पुनश्चन्दनं चारुगन्धं
छिन्नं छिन्नं पुनरपि पुनः स्वादु चैवेक्षुकाण्डम्।
दग्धं दग्धं पुनरपि पुनः काञ्चनं कान्तवर्णं
प्राणान्तेऽपि प्रकृतिविकृतिर्जायते नोत्तमानाम्"॥

ततः प्रसन्नेन योगिना कठिनी, योगदण्डः, कन्था च दत्ता। उक्तञ्च—"भो राजन् ! अनया कठिन्या भूमौ यावत्यः रेखाः लिख्यन्ते, तावन्ति योजनानि एकस्मिन् दिने गन्तुं शक्यन्ते; एष योगदण्डः दक्षिणहस्तेन स्पृश्यते यदि तर्हि मृतसैन्यं संजीव्य उत्तिष्ठति, वामहस्तेन स्पृश्यते यदि तदा सर्वस्यापि विपक्षस्य सैन्यनाशो भवति; इयं कन्थाऽपि यत्सकाशे वर्त्तते तस्मै ईप्सितवस्तूनि प्रयच्छति"।

राज्ञाऽपि तत्त्रयं गृहीत्वा योगिनं नमस्कृत्य अनुज्ञां लब्ध्वा यावद् गम्यते, तावद्राजमार्गे कश्चिद्राजकुमारः सम्मुखे अग्निं संस्थाप्य काष्ठानि सञ्चिनोति इति अदृश्यत। ततः राजा तमपृच्छत्—"भोः सौम्य ! किमेवं क्रियते ?" तेनोक्तम्—"अहं कश्चिद्राजकुमारः, मम राज्यं दायादैरपहृतं,

दरिद्रोऽहं जीवनं धारयितुमक्षमः सन् अग्नौ प्रवेशं कर्त्तुं काष्ठानि सञ्चिनोमि"। ततो राजा तस्मै अभयं दत्वा तां कठिनीं योगदण्डं कन्थाञ्च ददौ, तेषां गुणानपि अकथयत्। तदनन्तरम् अतिसन्तुष्टो राजकुमारो राजानं प्रणम्य स्वदेशमगमत्; विक्रमोऽपि उज्जयिनीमगात्।

इमां कथां कथयित्वा पुत्तलिका भोजराजमवदत्—"भो राजन्! त्वयि यदि एवम् औदार्य्यादयो गुणा विद्यन्ते तर्हि अस्मिन् सिंहासने समुपविश"।

राजा तूष्णीं स्थितः।

---

## ३२—वर्षावर्णनम्।

अयं स कालः संप्राप्तः समयोऽद्य जलागमः।
संपश्य त्वं नभो मेघैः संवृतं गिरिसंनिभैः॥ १॥
नवमासधृतं गर्भं भास्करस्य गभस्तिभिः।
पीत्वा रसं समुद्राणां द्यौः प्रसूते रसायनम्॥ २॥
मेघकृष्णाजिनधरा धारायज्ञोपवीतिनः।
मारुतापूरितगुहाः प्राधीता इव पर्वताः॥ ३॥
रजः प्रशान्तं सहिमोऽद्य वायु-
निदाघदोषप्रसराः प्रशान्ताः।
स्थिता हि यात्रा वसुधाधिपानां
प्रवासिनो यान्ति नराः स्वदेशान्॥ ४॥



व्यामिश्रितं सर्जकदम्बपुष्पैर्नवं जलं पर्वतधातुताम्रम्।
मयूरकेकाभिरनुप्रयातं शैलापगाः शीघ्रतरं वहन्ति॥ ५॥
रसाकुलं षट्पदसंनिकाशं
प्रभुज्यते जम्बुफलं प्रकामम्।
अनेकवर्णं पवनावधूतं
भूमौ पतत्याम्रफलं विपक्वम्॥ ६॥
विद्युत्पताकाः सबलाकमालाः शैलेन्द्रकूटाकृतिसंनिकाशाः।
गर्जन्ति मेघाः समुदीर्णनादा मत्ता गजेन्द्रा इव संयुगस्थाः॥७॥
वर्षोदकाऽऽप्यायितशाद्वलानि
प्रवृत्तनृत्तोत्सवबर्हिणानि।
वनानि निर्वृष्टबलाहकानि
पश्याऽपराह्णेष्वधिकं विभान्ति॥ ८॥
समुद्वहन्तः सलिलातिभारं
बलाकिनो वारिधरा नदन्तः।
महत्सु शृङ्गेषु महीधराणां
विश्रम्य विश्रम्य पुनः प्रयान्ति॥ ९॥
वहन्ति वर्षन्ति नदन्ति भान्ति
ध्यायन्ति नृत्यन्ति समाश्वसन्ति।
नद्यो घना मत्तगजा वनान्ताः
प्रियाविहीनाः शिखिनः प्लवंगाः॥ १०॥

अङ्गारचूर्णोत्करसंनिकाशैः
फलैः सुपर्याप्तरसैः समृद्धैः ।
जम्बूद्रुमाणां प्रविभान्ति शाखा
निपीयमाना इव षट्पदौघैः ॥ ११ ॥

षट्पादतन्त्रीमधुराभिधारं
प्लवंगमोदीरितकण्ठतालम् ।
आविष्कृतं मेघमृदङ्गनादै-
र्वनेषु संगीतमिव प्रवृत्तम् ॥ १२ ॥

क्वचित्प्रनृत्तैः क्वचिदुन्नदद्भिः
क्वचिच्च वृक्षाग्रनिषण्णकायैः ।
व्यालम्बबर्हाभरणैर्मयूरै-
र्वनेषु संगीतमिव प्रवृत्तम् ॥ १३ ॥

मत्ता गजेन्द्रा मुदिता गवेन्द्रा
वनेषु विक्रान्ततरा मृगेन्द्राः ।
रम्या नगेन्द्रा निभृता नरेन्द्राः
प्रक्रीडितो वारिधरैः सुरेन्द्रः ॥ १४ ॥

मेघाः समुद्धूतसमुद्रनादा
महाजलौघैर्गगनावलम्बाः ।
नदीस्तडागानि सरांसि वापी-
र्महीं च कृत्स्नामपवाहयन्ति ॥ १५ ॥



वर्षप्रवेगा विपुलाः पतन्ति
प्रवान्ति वाताः समुदीर्णवेगाः ।
प्रनष्टकूलाः प्रवहन्ति शीघ्रं
नद्यो जलं विप्रतिपन्नमार्गाः ॥ १६ ॥

घनोपगूढं गगनं न तारा
न भास्करो दर्शनमभ्युपैति ।
नवैर्जलौघैर्धरणी वितृप्ता
तमोविलिप्ता न दिशः प्रकाशाः ॥ १७ ॥

महान्ति कूटानि महीधराणां
धाराविधौतान्यधिकं विभान्ति ।
महाप्रमाणैर्विपुलैः प्रतापै-
र्मुक्ताकलापैरिव लम्बमानैः ॥ १८ ॥

---

## ३३—इन्द्रद्युम्नोपाख्यानम् ।

कीर्तिः स्वर्गाय कल्पते ।

मार्कण्डेयं पाण्डवाः पर्यपृच्छन् "अस्ति कश्चित् भवतश्चिरजाततरः ?" इति । स तान् उवाच—"अस्ति खलु राजर्षिरिन्द्रद्युम्नो नाम क्षीणपुण्यस्त्रिदिवात् प्रच्युतः । 'कीर्तिः मे व्युच्छिन्ना' इति स मामुपातिष्ठत् "अथ प्रत्यभिजानाति मां भवान् ?" इति । तमहमब्रुवम् "न वयं कार्य-

चेष्टाकुलत्वात् प्रत्यभिजानीमः । आत्मनोऽर्थानामनुष्ठानं शरीरोपतापेन समारभामहे ।"

स मामुवाच "अस्ति अन्यः त्वत्तश्चिरजातः ?" इति । तमहमब्रुवम् "अस्ति खलु हिमवति प्रावारकर्णो नाम उलूकः प्रतिवसति, स मत्तश्चिरजातो भवन्तं यदि जानीयात् । इतः प्रकृष्टे चाध्वनि हिमवान्, तत्रासौ प्रतिवसति" इति ।

ततः स माम् अश्वो भूत्वा तत्रावहत्, यत्र बभूव उलूकः । अथैनं स राजा पप्रच्छ "प्रतिजानाति मां भवान् ?" इति । स मुहूर्तमिव ध्यात्वा अब्रवीदेनम् "नाभिजानामि भवन्तम्" इति ।

स एवमुक्त इन्द्रद्युम्नः पुनस्तमुलूकमब्रवीत् राजर्षिः "अथास्ति कश्चिद्भवतः सकाशाच्चिरजातः ?" इति । स एवमुक्तोऽब्रवीत् "अस्ति खल्विन्द्रद्युम्नं नाम सरः, तस्मिन् नाडीजङ्घो नाम बकः प्रतिवसति । सोऽस्मत्तश्चिरजाततरः, तं पृच्छ" इति ।

तत इन्द्रद्युम्नो माश्च उलूकं च आदाय तत्सरोऽगच्छत्, यत्रासौ नाडीजङ्घो नाम बको बभूव । सोऽस्माभिः पृष्टः "भवान् इममिन्द्रद्युम्नं राजानमभिजानाति ?" इति । स एनं मुहूर्तं ध्यात्वा अब्रवीत् "नाभिजानामि अहमिन्द्रद्युम्नं राजानम्" इति ।



ततः सोऽस्माभिः पृष्टः "कश्चिद्भवतोऽन्यश्चिरजाततरोऽस्ति ?" इति । स नोऽब्रवीत् "अस्ति खलु अस्मिन्नेव सरसि अकूपारो नाम कच्छपः प्रतिवसति स मत्तश्चिरजाततरः । स यदि कथञ्चिदभिजानीयादिमं राजानम् । तमकूपारं पृच्छत" इति ।

ततः स बकस्तमकूपारं कच्छपं विज्ञापयामास "अस्ति अस्माकमभिप्रेतं भवन्तं कञ्चिदर्थमिति प्रष्टुम् । साधु आगम्यतां तावत्" इति ।

तच्छ्रुत्वा कच्छपस्तस्मात् सरसः उत्थाय अभ्यगच्छत्, यत्र तिष्ठामो वयं तस्य सरसस्तीरे । आगतश्चैनं वयं पृच्छामः "भवान् इमम् इन्द्रद्युम्नं राजानमभिजानाति ?" इति ।

स मुहूर्तं ध्यात्वा वाष्पसम्पूर्णनयन उद्विग्नहृदयो वेपमानो विसंज्ञकल्पः प्राञ्जलिरब्रवीत् "किमहमेनं न प्रत्यभिज्ञास्यामि, इह हि अनेन सहस्रकृत्वः चितिषु यूपा आहिताः । सरश्चेदमस्य दक्षिणाभिः दत्ताभिर्गोभिः क्रममाणाभिः कृतम्, अत्र चाहं प्रतिवसामि" इति ।

अथैतत् सकलं कच्छपेनोदाहृतं श्रुत्वा तदनन्तरं देवलोकाद्देवरथः प्रादुरासीत्, वाचश्च अश्रूयन्त इन्द्रद्युम्नं प्रति "संस्तुतस्ते स्वर्गः, यथोचितं स्थानं प्रतिपद्यस्व, स्वकीर्तिमान् असि, अव्यग्रो याहि" इति ।

भवन्ति चात्र श्लोकाः—
'दिवं स्पृशति भूमिश्च शब्दः पुण्यस्य कर्मणः ।
यावत् स शब्दो भवति तावत् पुरुष उच्यते ॥
अकीर्तिः कीर्त्यते लोके यस्य भूतस्य कस्यचित् ।
स पतत्यधमान् लोकान् यावत् शब्दः प्रकीर्त्यते ॥
तस्मात् कल्याणवृत्तः स्यात् अनन्ताय नरः सदा ।
विहाय वित्तं पापिष्ठं धर्ममेव समाश्रयेत् ॥'

एतत् श्रुत्वा स राजा अब्रवीत् "तिष्ठ तावत्, यावत् इमौ वृद्धौ यथास्थानं प्रतिपादयामि" इति ।

स मां प्रावारकर्णं च उलूकं यथोचिते स्थाने प्रतिपाद्य तेनैव यानेन संस्थितो यथोचितं स्थानं प्रतिपेदे ।

"तन्मयाऽनुभूतं चिरजीविना ईदृशम्" इति पाण्डवान् उवाच मार्कण्डेयः । पाण्डवाश्च ऊचुः "साधु शोभनं भवता कृतं राजानमिन्द्रद्युम्नं स्वर्गलोकात् च्युतं स्वस्थाने प्रतिपादयता" इति ।

---

## ३४—चन्द्रवर्णनम् ।

ततः स मध्यं गतमंशुमन्तं
ज्योत्स्नावितानं मुहुरुद्वमन्तम् ।
ददर्श धीमान् भुवि भानुमन्तं
गोष्ठे वृषं मत्तमिव भ्रमन्तम् ॥१॥



लोकस्य पापानि विनाशयन्तं
महोदधिं चाऽपि समेधयन्तम् ।
भूतानि सर्वाणि विराजयन्तं
ददर्श शीतांशुमथाऽभियान्तम् ॥२॥

या भाति लक्ष्मीर्भुवि मन्दरस्था
यथा प्रदोषेषु च सागरस्था ।
तथैव तोयेषु च पुष्करस्था
रराज सा चारुनिशाकरस्था ॥३॥

हंसो यथा राजतपञ्जरस्थः
सिंहो यथा मन्दरकन्दरस्थः ।
वीरो यथा गर्वितकुञ्जरस्थ-
श्चन्द्रोऽपि बभ्राज तथाऽम्बरस्थः ॥४॥

स्थितः ककुद्मानिव तीक्ष्णशृङ्गो
महाऽचलः श्वेत इवोर्ध्वशृङ्गः ।
हस्तीव जाम्बूनदबद्धशृङ्गो
विभाति चन्द्रः परिपूर्णशृङ्गः ॥५॥

विनष्टशीताऽम्बुतुषारपङ्को
महाग्रहग्राहविनष्टपङ्कः ।
प्रकाशलक्ष्म्याश्रयनिर्मलाङ्को
रराज चन्द्रो भगवाञ्छशाङ्कः ॥६॥

शिलातलं प्राप्य यथा मृगेन्द्रो
महारणं प्राप्य यथा गजेन्द्रः ।
राज्यं समासाद्य यथा नरेन्द्र-
स्तथा प्रकाशो विरराज चन्द्रः ॥७॥

---

## ३५—त्रिशिरस उपाख्यानम् ।

देहोत्सर्गोऽपि लोकाय ।

विश्वरूपो हि वै त्वाष्ट्रः पुरोहितो देवानामासीत्, स्वस्रीयोऽसुराणाम् । स प्रत्यक्षं देवेभ्यो भागमदात्, परोक्षमसुरेभ्यः ।

अथ हिरण्यकशिपुं पुरस्कृत्य, विश्वरूपमातरं स्वसारमसुरा वरमयाचन्त "हे स्वसः, अयन्ते पुत्रस्त्वाष्ट्रो विश्वरूपस्त्रिशिरा देवानां पुरोहितः प्रत्यक्षं देवेभ्यो भागमदात्, परोक्षमस्माकम् । ततो देवा वर्द्धन्ते, वयं क्षीयामहे । तदेनं त्वं वारयितुमर्हसि तथा यथा अस्मान् भजेत्" इति ।

अथ विश्वरूपं नन्दनवनमुपागतं माता उवाच "पुत्र ! किं परपक्षवर्द्धनस्त्वं मातुलपक्षं नाशयसि ? नार्हस्येवं कर्त्तुम्" इति । स विश्वरूपो मातुर्वाक्यमनतिक्रमणीयम् इति मत्वा सम्पूज्य हिरण्यकशिपुमगात् । हैरण्यगर्भाच्च वशिष्ठात् हिरण्यकशिपुः शापं प्राप्तवान् "यस्मात् त्वयाऽन्यो



वृतो होता, तस्मादसमाप्तयज्ञस्त्वमपूर्वात् सत्त्वजातात् वधं प्राप्स्यसि" इति । तच्छापदानात् हिरण्यकशिपुः प्राप्तवान् वधम् ।

अथ विश्वरूपो मातृपक्षवर्द्धनोऽत्यर्थं तपसि अभवत् । तस्य व्रतभङ्गार्थमिन्द्रो बह्वीः श्रीमत्योऽप्सरसो नियुयोज । ताश्च दृष्ट्वा मनः क्षुभितं तस्याभवत् । तासु चाप्सरःसु न चिरादेव सक्तोऽभवत् । सक्तश्चैनं ज्ञात्वा अप्सरस ऊचुः "गच्छामो वयं यथागतम्" इति ।

ताः त्वाष्ट्र उवाच "क्व गमिष्यथ ? आस्यतां तावन्मया सह, श्रेयो भविष्यति" इति । तास्तमब्रुवन्—'वयं देवस्त्रियोऽप्सरस इन्द्रं देवं वरदं पुरा प्रभविष्णुं वृणीमहे" इति । अथ ताः विश्वरूपोऽब्रवीत् "अद्यैव सेन्द्रा देवा न भविष्यन्ति" इति । ततो मन्त्रान् जजाप, तैर्मन्त्रैरवर्द्धत त्रिशिराः । एकेनास्येन सर्वलोकेषु यथावत् द्विजैः क्रियावद्भिर्यज्ञेषु सुहुतं सोमं पपौ, एकेनान्नम्, एकेन सेन्द्रान् देवान् ।

अथेन्द्रस्तं विवर्द्धमानं सोमपानाप्यायितसर्वगात्रं दृष्ट्वा चिन्तामापेदे सह देवैः । ते देवाः सेन्द्रा ब्रह्माणमभिजग्मुः । ते ऊचुः "विश्वरूपेण सर्व्वयज्ञेषु सुहुतः सोमः पीयते, वयमभागाः संवृत्ताः । असुरपक्षो वर्द्धते, वयं क्षीयामहे । तदर्हसि नो विधातुं श्रेयोऽनन्तरम्" इति ।

तान् ब्रह्मोवाच—"ऋषिभार्गवस्तपस्तप्यते दधीचः ।

स याच्यतां वरम्, स यथा कलेवरं जह्यात् तथा विधीयतां तस्यास्थिभिर्वज्रं क्रियताम्" इति। ततो देवास्तत्र अगच्छन् यत्र दधीचो भगवान् ऋषिस्तपस्तेपे।

सेन्द्रा देवास्तं तथाभिगम्य ऊचुः—"भगवन्! तपः सुकुशलम् अभिन्नश्च ?" इति।

तान् दधीच उवाच—"स्वागतं भवद्भ्यः, उच्यतां किं क्रियताम् ? इति। यत् वक्ष्यथ तत् करिष्यामि।" ते तमब्रुवन् "शरीरपरित्यागं लोकहितार्थं भगवान् कर्तुमर्हति" इति।

अथ दधीचस्तथैव अविमनाः सुखदुःखसमो महायोगी आत्मानं समाधाय शरीरपरित्यागं चकार। तस्य आत्मनि अपसृते तानि अस्थीनि धाता सङ्गृह्य वज्रमकरोत्। तेन वज्रेण अभेद्येन अधृष्येण ब्रह्मास्थिसम्भूतेन विष्णुप्रविष्टेन इन्द्रो विश्वरूपं जघान, शिरसाञ्चास्य च्छेदनमकरोत्। तस्मादनन्तरं विश्वरूपगात्रमथनसम्भवं त्वाष्ट्रोत्पादितमेवारिं वृत्रमिन्द्रो जघान।

---



## ३६—अनुसंख्यं सुभाषितानि।

(१)

एकः सम्पन्नमश्नाति वस्ते वासश्च शोभनम्।
योऽसंविभज्य भृत्येभ्यः को नृशंसतरस्ततः॥ १॥
एकः पापानि कुरुते फलं भुङ्क्ते महाजनः।
भोक्तारो विप्रमुच्यन्ते कर्त्ता दोषेण लिप्यते॥ २॥
एकं हन्यान्न वा हन्यादिषुर्मुक्तो धनुष्मता।
बुद्धिर्बुद्धिमतोत्सृष्टा हन्याद्राष्ट्रं सराजकम्॥ ३॥
एकं विषरसो हन्ति शास्त्रेणैकश्च वध्यते।
सराष्ट्रं सप्रजं हन्ति राजानं मन्त्रविप्लवः॥ ४॥
एकः स्वादु न भुञ्जीत एकश्चार्थान्न चिन्तयेत्।
एको न गच्छेदध्वानं नैकः सुप्तेषु जागृयात्॥ ५॥
एकः क्षमावतां दोषो द्वितीयो नोपपद्यते।
यदेनं क्षमया युक्तमशक्तं मन्यते जनः॥ ६॥
सोऽस्य दोषो न मन्तव्यः क्षमा हि परमं बलम्।
क्षमा गुणो ह्यशक्तानां शक्तानां भूषणं क्षमा॥ ७॥
क्षमा वशीकृतिर्लोके क्षमया किं न साध्यते।
शान्तिखड्गः करे यस्य किं करिष्यति दुर्जनः॥८॥
द्वाविमौ ग्रसते भूमिः सर्पो बिलशयानिव।
राजानं चाविरोद्धारं ब्राह्मणं चाप्रवासिनम्॥ ९॥

द्वे कर्मणी नरः कुर्वन्नस्मिँल्लोके विरोचते ।
अब्रुवन्परुषं कश्चिदसतोऽनर्चयंस्तथा ॥ १० ॥
द्वाविमौ कण्टकौ तीक्ष्णौ शरीरपरिशोषिणौ ।
यश्चाधनः कामयते यश्च कुप्यत्यनीश्वरः ॥ ११ ॥
द्वावेव न विराजेते विपरीतेन कर्मणा ।
गृहस्थश्च निरारम्भः कार्यवांश्चैव भिक्षुकः ॥ १२ ॥
द्वाविमौ पुरुषौ राजन्स्वर्गस्योपरि तिष्ठतः ।
प्रभुश्च क्षमया युक्तो दरिद्रश्च प्रदानवान् ॥ १३ ॥
न्यायागतस्य द्रव्यस्य बोद्धव्यौ द्वावतिक्रमौ ।
अपात्रे प्रतिपत्तिश्च पात्रे चाप्रतिपादनम् ॥ १४ ॥
द्वावम्भसि निवेष्टव्यौ गले बद्ध्वा दृढां शिलाम् ।
धनवन्तमदातारं दरिद्रं चातपस्विनम् ॥ १५ ॥
द्वाविमौ पुरुषव्याघ्र ! सूर्यमण्डलभेदिनौ ।
परिव्राड् योगयुक्तश्च रणे चाभिमुखो हतः ॥ १६ ॥
त्रयः पापा मनुष्याणां श्रूयन्ते भरतर्षभ ।
कनीयान्मध्यमः श्रेष्ठ इति वेदविदो विदुः ॥ १७ ॥
त्रिविधाः पुरुषा राजन्नुत्तमाधममध्यमाः ।
नियोजयेद्यथावत्तांस्त्रिविधेष्वेव कर्मसु ॥ १८ ॥
त्रय एवाधना राजन्भार्या दासस्तथा सुतः ।
यत्ते समधिगच्छन्ति यस्य ते तस्य तद्धनम् ॥ १९ ॥
हरणं च परस्वानां परदाराभिमर्शनम् ।



सुहृदश्च परित्यागस्त्रयो दोषाः क्षयावहाः ॥२०॥
त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।
कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ॥२१॥
वरप्रदानं राज्यं च पुत्रजन्म च भारत ।
शत्रोश्च मोक्षणं कृच्छ्रात् त्रीणि चैकं च तत्समम् ॥२२॥
भक्तं च भजमानं च तवास्मीति च वादिनम् ।
त्रीनेताञ्छरणं प्राप्तान्विषमेऽपि न सन्त्यजेत् ॥२३॥
चत्वारि राज्ञा तु महाबलेन
वर्ज्यान्याहुः पण्डितस्तानि विद्यात् ।
अल्पप्रज्ञैः सह मन्त्रं न कुर्या-
न्न दीर्घसूत्रै रभसैश्चारणैश्च ॥२४॥
चत्वारि ते तात ! गृहे वसन्तु
श्रियाभिजुष्टस्य गृहस्थधर्मे ।
वृद्धो ज्ञातिरवसन्नः कुलीनः
सखा दरिद्रो भगिनी चानपत्या ॥२५॥
चत्वार्याह महाराज साद्यस्कानि बृहस्पतिः ।
पृच्छते त्रिदशेन्द्राय तानीमानि निबोध मे ॥२६॥
देवतानां च संकल्पमनुभावं च धीमताम् ।
विनयं कृतविद्यानां विनाशं पापकर्मणाम् ॥२७॥
चत्वारि कर्माण्यभयङ्कराणि
भयं प्रयच्छन्त्ययथाकृतानि ।

मानाग्निहोत्रमुत मानमौनं,
मानेनाधीतमुत मानयज्ञः ॥२८॥
पञ्चाग्नयो मनुष्येण परिचर्याः प्रयत्नतः।
पिता माताग्निरात्मा च गुरुश्च भरतर्षभ ! ॥२९॥
पञ्चैव पूजयंल्लोके यशः प्राप्नोति केवलम्।
देवान्पितॄन् मनुष्यांश्च भिक्षूनतिथिपञ्चमान् ॥३०॥
पञ्च त्वानुगमिष्यन्ति यत्र यत्र गमिष्यसि।
मित्राण्यमित्रा मध्यस्था उपजीव्योपजीविनः ॥३१॥
पञ्चेन्द्रियस्य मर्त्यस्य छिद्रं चेदेकमिन्द्रियम्।
ततोऽस्य स्रवति प्रज्ञा दृतेः पात्रादिवोदकम् ॥३२॥

---

## ३७—महीपतिर्भोजः।

आकर्षमन्त्रैरिव सत्प्रयोगै-
राकृष्यते साधुगुणैर्न को वा।

पुरासीत्खलु धाराराज्ये विक्रमादित्यान्वयसंभवः सिन्धुलो नाम नरपतिः। अतिक्रान्ते बहुवयसि सम्प्राप्ते स्थाविरे तस्यैकः सुतः समजनि यश्च भोजेत्यभिख्यां लेभे। भोजः पञ्चवार्षिक एवासीत्तदैव तस्य पिता स्वप्राणप्रयाणावसरं समीपमागतं ज्ञात्वा स्वामात्यं बुद्धिसागरं समाहूय विचारयामास—"यद्यहं बलिनं सोदरं मुञ्जमपहाय राज्यं



पुत्राय प्रयच्छामि तदा लोकापवादः। सोऽपि वा बालं मे पुत्रं राज्यलोभात्कथंचिन्मारयिष्यति। ततश्च दत्तमपि राज्यं वृथा, पुत्रहानिर्वंशोच्छेदश्च।" इत्येवं संप्रधार्य सिन्धुलः सराज्यं भोजं मुञ्जाय समर्प्य प्राणांस्तत्याज।

अथ प्राप्तराज्य एव मुञ्जो बुद्धिसागरमन्यत्र व्यापारे नियोज्य वत्सराजममात्यपदे प्रतिष्ठापितवान्। भोजस्याध्ययनाय च पाठशालामेकामकल्पयत्। कालेन भोजो न्यायव्याकरणेतिहासादिषु महत्प्रावीण्यमासाद्य प्रज्ञायां बृहस्पतिरिवापरो बभूव। विशेषतश्च काव्यरचनायां महत्पाटवमधिगतवान्।

एकस्मिन्वासरे मुञ्जः पाठशालामगात्। तत्र च भोजस्यासाधारणं दाक्षिण्यं वैशारद्यं च समीक्ष्य भयचकितमना अचिन्तयत्। यदयं तु स्वपितुरपेक्षयाप्यतिशयेन सत्त्ववान् प्रतापी गुणान्वितश्च संलक्ष्यते। यौवनमासाद्यैव मम हस्ताद् राज्यमाच्छेत्स्यति। अतोऽयं साम्प्रतमेव हन्तव्यः। एवं पर्यालोच्य मुञ्जो वत्सराजं समाहूय निर्जने तमुक्तवान्—"भवान्मे परमो वयस्यः सम्पदापत्सहायश्च। यत्कार्यं भवाननुष्ठातुं शक्नोति न हि तदितरः। इममर्थं साधयितुं भवानाकारितो यदद्य रजन्यां भोजमरण्ये नीत्वा व्यापादयतु। तदीयशिरश्च छित्त्वा मदन्तिके समानीयताम्।" इति।

निशम्यैतद्वचो वत्सराजो महान्तं शोकमुपागमत्। शोककातरश्च सविनयमब्रवीत्—"महाराज! बालोऽस्ति सांप्रतं भोजः। नैव तस्याधिकारे बलं द्रव्यं वा विद्यते। यतो भयं भवतां भवेत्। ततश्च तद्व्यापादाने किं भवतां हस्तगतं भविष्यति। अतो विचार्यैव कार्यमनुष्ठेयम्। अविचार्य कृतं हि कार्यं परिणामे नितरां तापयति। नानाविधाश्च व्यापत्तयस्ततः समुत्पद्यन्ते। किञ्च समस्तप्रकृतिवत्सलो हि भोजः। तस्य प्राणादाने हि महान् प्रकृतिविप्लवोऽवश्यंभावी। तस्यामवस्थायां च भवतामात्मरक्षात्र वसतिश्च सुदुर्लभे भविष्यतः।" इति।

एतदाकर्ण्य मुञ्जः क्रोधविहस्त आरक्तलोचनोऽब्रवीत्—"त्वमपि भोजस्य पक्षपाती। अतस्त्वमपि सहैव तेन हन्तव्यः" इति।

एतच्छ्रुत्वैव वत्सराजो नितरां वैक्लव्यमेत्य चिन्तितवान्। यन्मूढोऽसौ यदप्यनुतिष्ठेत्तदल्पम्। संप्रधार्यैवं वत्सराजोऽभ्यधात्—"महीपते! अनवधार्यैव पूर्वमभिहितं मया। क्षन्तव्योऽहम्।" इति। ततो मुञ्जः सस्मितं प्राह—"भद्र! मर्षितापराधोऽसि। परं ममादेशस्त्वरितं विधीयताम्।" इति।

अथ सायं वत्सराजः पाठशालायां भोजगुरोरन्तिकं प्राप, अवोचच्च यद्भोजो मद्द्वितीयो विधेयः। विदिताखिल-



वृत्तान्तो भोजस्य गुरुर्नितरां दुःखकातरो बभूव। तमेवं दृष्ट्वा वत्सराजस्तमाह—"नाहमत्रापराधी। राज्ञा यथादिष्टं तथा करोमि" इति। एतदाकर्ण्य निस्त्रिंशं दैवमुपालभमानो गुरुर्भोजमाहूतवान्। स चागत्य वत्सराजसविधे तस्थौ। अमात्योऽपि हस्ताभ्यां तमादाय रथ उपवेश्य कान्तारं निनाय। तत्र च भोजमाह—"राजकुमार! तव पितृव्यो राज्यलोलुपो भूत्वा ते वधादेशं दत्तवान्। अतो विवशो राजादेशकारी अहं त्वां निहन्मि।" इत्यभिधाय खड्गस्तेनाकृष्टः।

ततो मृत्युमेवमुपस्थितं दृष्ट्वाप्यविचलितधैर्योऽभाषत भोजः—"यः प्रभुर्मम जन्मनः प्राक् समसृजद् दुग्धं स किमिदानीं शयित उताहो मृतः?" वत्सराजं तु प्राह—"अमात्य! नात्र भवानपराध्यति। वश्यो भवान्। एष एव खलु सेवकस्य धर्मो यत्प्रभोरादेशस्यानुसरणम्। परं ममाप्येष प्रणयोऽनुमन्तव्यो यल्लिखितमेतद्दलं मम पितृव्याय दातव्यम्।" इत्यभिधाय समीपस्थवटवृक्षस्यैकस्मिन् पत्रे स्वजङ्घां छित्त्वा तद्रक्तेन कथंचित्कंचन श्लोकं लिखित्वा तद्दलं वत्सराजाय समर्पितवान्।

भोजस्यैतादृशं दार्ढ्यमालोक्य वत्सराजः साश्चर्यमवोचत्—"राजपुत्र! अलौकिकमेतद्धैर्यं पश्यतो मम नहि सकृपाणपाणिर्भवत उपरि पतति।" इत्युक्तवतस्तस्य करुणाप्लावितचेतसो नयने सजले अभूताम्। कराचासिर्धरण्यां

न्यपतत्। भोजचरणयोश्च शिरो निधाय स पुनरभ्यधात्— "धिङ् मां पुरुषापसदं यदहं लोभाभिभूतचेतसो भवत्पितृव्यस्य निदेशेऽनुवर्तमानोऽतिनिर्घृणतमोऽतिनिगर्हितेऽस्मिन् पापकर्मणि प्रवृत्तोऽभूवम्" इति। भोजोऽपि तस्य तादृशे प्रीत्यनुकम्पे समालोक्य वत्सराजोरसि संश्लिष्टस्तमाह— "अमात्यवर! समाश्वसिहि समाश्वसिहि। अलमायासकरेणातिशोकेन" इति।

तदनु वत्सराजो भोजं घने तमसि स्वगृहमागमय्य सुगूढं च गोपयित्वा भोजशिरोऽनुकारि कृत्रिममेकं शिरो मुञ्जस्य समीपं नीत्वा तं दर्शितवान्। तदालोक्यैव मुञ्जः परमां मुदमुपागमत्। वत्सराजं च स्वसमीप एव न्यषीषदत्। अनन्तरं च वत्सराजो भोजेन लिखितं दलं प्रादात्। मुञ्जश्च सोद्वेगं यावत्तदुद्घाटयति तावदेतत्पद्यं तत्र रक्ताङ्कितं पश्यति—

मान्धाता च महीपतिः कृतयुगालंकारभूतो गतः
सेतुर्येन महोदधौ विरचितः क्वासौ दशास्यान्तकः।
अन्ये चापि युधिष्ठिरप्रभृतयो याता दिवं भूपते!
नैकेनापि समं गता वसुमती मुञ्ज त्वया यास्यति॥

एतद्वाचनानन्तरमेव राज्ञो हृदयेन शोकपरितप्तेनाभावि। सोरस्ताडं स्वशिरो घूर्णयंश्च स आक्रन्दितुमारेभे। "हा हन्त! किमिदमज्ञतमेन मयानुष्ठितं यदपराधमन्तरेणैव निरपराधमधुरवयसि वर्तमानः सुवृत्तोऽसौ मया व्यापादितः।



हा! हा! न जाने का गतिर्मम भविष्यति एतत्कृते। कथं नु मामपवदिष्यति लोकः। नूनमेवमाचरता मयात्मनैवाङ्गाराः समाकर्षिताः। किं बहुना—

स्वयं निर्मायान्धुं बत हतधियास्मिन्निपतितं
मया व्यादायास्यं स्वयमहिपतेश्चुम्बितमिदम्॥
कृपाणेन स्वेन प्रहृतमिदमात्मन्यकरुणं
स्वयं सुप्त्वा सद्मन्यहह निहितो द्वारि दहनः॥

तत्सर्वथावश्यंभावी मम पापिष्ठस्य निरयवासः।" इत्येवं सुबहु जल्पन् चेतनाहीनो धरण्यां पपात। अचिरादेव च लब्धसंज्ञो भूत्वा कृपाणमादाय ग्रीवां निजां छेत्तुं प्रवृत्तः।

समालोक्यैतामवर्णनीयां तस्य दशां वत्सराजः सुबहु तं प्राबोधयत्। परमनाकर्ण्यैव तस्य वाचमवोचन्मुञ्जः— "हा! मया पापचेतसा न केवलमात्मन एव किन्तु स्वभ्रातुरपि कुलं निकृत्तम्। महाप्राज्ञो वंशशोभाकरः खल्वासीद्भोजः" इति। मुञ्जस्य तामेतादृशीं दुरवस्थां दृष्ट्वा संयताञ्जलिर्वत्सराजः प्राह—"महाराज! प्रथमत एवाहं परिचितभवदीयमृदुदयालुस्वभाव आसम्। अतो भवदादिष्टेनापि मया नैव हतो भोजः। कृत्रिमं च पुनः शिरो दर्शितम्" इति।

एतदाकर्ण्यैव मुञ्जो वत्सराजमालिङ्ग्य संजातनिर्भरमोदः समादिष्टवान्—"तदानीयतां शीघ्रमेव भोजः" इति।

अथ तेन समानीतमेव भोजमवेक्ष्य मुञ्जोऽत्यन्तं

रुदित्वावोचत्—"वत्स ! महत्पापमनुष्ठितं मया यल्लोभपरवशेन तव वधाय समादिष्टम् । तदस्मादेनसो मोचयितुमात्मानमेष एवोपायो यद्भवन्तं राज्येऽभिषिच्य अरण्ये तपश्चरन् देहं संत्यजामि" इति । ततश्च भोजं निजसिंहासने निवेश्य छत्रचामराभ्यां च भूषयित्वा स्वयं सभार्यो मुञ्जो वनं जगाम । तत्र च तपोवनभूमौ तपश्चरणे निरतः कालमतिवाहयामास ।

भोजश्च चिराय राज्यशासनं कुर्वन् दिगन्तविश्रान्तकीर्त्तिः सततमेव प्रजापालनपरायणस्तस्थौ । सर्वदैव विद्वत्समाजपूजापरः स नानादेशेभ्यो विदुषः सादरं स्वदेशमानाय्य सुबहु विद्याप्रचारमकरोत् । तत्काले हि रचिता अनेके ग्रन्था अद्यापि तत्स्मृतिं जनयन्ति । तत्रैते श्लोका भोजस्य राज्यकालं तत्कृतविद्याप्रचारादिकं च ख्यापयन्ति—

पञ्चाशत्पञ्चवर्षाणि सप्तमासदिनत्रयम् ।
भोजराजेन भोक्तव्यः सगौडो दक्षिणापथः ॥

अद्य धारा सदाधारा सदालम्बा सरस्वती ।
पण्डिता मण्डिताः सर्वे भोजराजे भुवं गते ॥

अद्य धारा निराधारा निरालम्बा सरस्वती ।
पण्डिताः खण्डिताः सर्वे भोजराजे दिवं गते ॥ इति ।



किं बहुना, भोजस्यैतन्मनोरमं चरितं पठतः सहसा मुखान्निःसरति—

आकर्षमन्त्रैरिव सत्प्रयोगैराकृष्यते साधुगुणैर्न को वा ।
यद्वा । पदं हि सर्वत्र गुणैर्निधीयते । इति ॥

---

## ३८—अनुसंख्यं सुभाषितानि ।

### ( २ )

षड् दोषाः पुरुषेणेह हातव्या भूतिमिच्छता ।
निद्रा तन्द्रा भयं क्रोध आलस्यं दीर्घसूत्रिता ॥ ३३ ॥

षडिमान्पुरुषो जह्याद्भिन्नां नावमिवार्णवे ।
अप्रवक्तारमाचार्यमनधीयानमृत्विजम् ॥ ३४ ॥

अरक्षितारं राजानं भार्यां चाप्रियवादिनीम् ।
ग्रामकामं च गोपालं वनकामं च नापितम् ॥ ३५ ॥

षडेव तु गुणाः पुंसा न हातव्याः कदाचन ।
सत्यं दानमनालस्यमनसूया क्षमा धृतिः ॥ ३६ ॥

अर्थागमो नित्यमरोगिता च
प्रिया च भार्या प्रियवादिनी च ।
वश्यश्च पुत्रोऽर्थकरी च विद्या
षड् जीवलोकस्य सुखानि राजन् ! ॥ ३७ ॥

षण्णामात्मनि नित्यानामैश्वर्यं योऽधिगच्छति ।
न स पापैः कुतोऽनर्थैर्युज्यते विजितेन्द्रियः ॥ ३८ ॥
षडिमे षट्सु जीवन्ति सप्तमो नोपलभ्यते ।
चौराः प्रमत्ते जीवन्ति व्याधितेषु चिकित्सकाः ॥ ३९ ॥
प्रमदाः कामयानेषु यजमानेषु याजकाः ।
राजा विवदमानेषु नित्यं मूर्खेषु पण्डिताः ॥ ४० ॥
षडिमानि विनश्यन्ति मुहूर्तमनवेक्षणात् ।
गावः सेवा कृषिर्भार्या विद्या वृषलसङ्गतिः ॥ ४१ ॥
षडेते ह्यवमन्यन्ते नित्यं पूर्वोपकारिणम् ।
आचार्यं शिक्षिताः शिष्याः कृतदाराश्च मातरम् ॥४२॥
नारीं विगतकामास्तु कृतार्थाश्च प्रयोजकम् ।
नावं निस्तीर्णकान्तारा आतुराश्च चिकित्सकम् ॥ ४३॥

आरोग्यमानृण्यमविप्रवासः
सद्भिर्मनुष्यैः सह सम्प्रयोगः ।
स्वप्रत्यया वृत्तिरभीतवासः
षड् जीवलोकस्य सुखानि राजन् ! ॥ ४४ ॥

ईर्षुर्घृणी न संतुष्टः क्रोधनो नित्यशङ्कितः ।
परभाग्योपजीवी च षडेते नित्यदुःखिताः ॥ ४५ ॥
सप्त दोषाः सदा राज्ञा हातव्या व्यसनोदयाः ।
प्रायशो यैर्विनश्यन्ति कृतमूला अपीश्वराः ॥ ४६ ॥



स्त्रियोऽक्षा मृगया पानं वाक्पारुष्यं च पञ्चमम् ।
महच्च दण्डपारुष्यमर्थदूषणमेव च ॥ ४७ ॥

अष्टौ गुणाः पुरुषं दीपयन्ति
प्रज्ञा च कौल्यं च दमः श्रुतं च ।
पराक्रमश्चाबहुभाषिता च
दानं यथाशक्ति कृतज्ञता च ॥ ४८ ॥

नवद्वारमिदं वेश्म त्रिस्थूणं पञ्चसाक्षिकम् ।
क्षेत्रज्ञाधिष्ठितं विद्वान्यो वेद स परः कविः ॥ ४९ ॥
दश धर्मं न जानन्ति धृतराष्ट्र ! निबोध तान् ।
मत्तः प्रमत्त उन्मत्तः श्रान्तः क्रुद्धो बुभुक्षितः ॥ ५० ॥
त्वरमाणश्च लुब्धश्च भीतः कामी च ते दश ।
तस्मादेतेषु सर्वेषु न प्रसज्जेत पण्डितः ॥ ५१ ॥

---

## ३९—आहारविषये नियमाः ।

उष्णं स्निग्धं मात्रावज्जीर्णे वीर्याविरुद्धम् इष्टे देशे इष्टसर्वोपकरणं नातिद्रुतं नातिविलम्बितं न जल्पन्न हसंस्तन्मना भुञ्जीत आत्मानमभिसमीक्ष्य सम्यक् ।

तस्य साद्गुण्यमुपदेक्ष्यामः । उष्णमश्नीयात् । उष्णं हि भुज्यमानं स्वदते । भुक्तश्चाग्निमुदर्यमुदीरयति ।

क्षिप्रश्च जरां गच्छति, वातश्चानुलोमयति, श्लेष्माणश्च परिशोषयति, तस्मादुष्णमश्नीयात् ।

स्निग्धमश्नीयात् । स्निग्धं हि भुज्यमानं स्वदते । भुक्तश्चाग्निमुदीरयति । क्षिप्रं जरां गच्छति, वातमनुलोमयति, दृढीकरोति । शरीरोपचयं बलाभिवृद्धिश्चोपजनयति, वर्णप्रसादमपि चाभिनिर्वर्त्तयति । तस्मात् स्निग्धमश्नीयात् ।

मात्रावदश्नीयात् । मात्रावद्धि भुक्तं वातपित्तकफान् अप्रपीडयदायुरेव विवर्द्धयति केवलम् । सुखं सम्यक् पक्वं विड्भूतं गुदमनुपर्य्येति, न चोष्माणमुपहन्ति, अव्यथश्च परिपाकमेति । तस्मात् मात्रावदश्नीयात् ।

जीर्णेऽश्नीयात् । अजीर्णे हि भुञ्जानस्य पूर्वस्याहारस्य रसमपरिणतमुत्तरेणाहाररसेनोपसृजन् सर्वान् दोषान् प्रकोपयत्याशु । जीर्णे तु भुञ्जानस्य स्वस्थानस्थेषु दोषेषु अग्नौ चोदीर्णे जातायाश्च बुभुक्षायां विवृतेषु च स्रोतसां मुखेषु चोद्गारे विशुद्धे हृदये विशुद्धे वातानुलोम्ये विसृष्टेषु च वातमूत्रपुरीषवेगेषु जीर्णमभ्यवहृतमाहारजातं सर्वशरीरधातूनप्रदूषयदायुरेवाभिवर्द्धयति केवलम् । तस्माज्जीर्णेऽश्नीयात् ।

वीर्य्याविरुद्धमश्नीयात् । अविरुद्धवीर्य्यमश्नन् हि न विरुद्धवीर्य्याहारजैर्विकारैरयमुपसृज्यते । तस्माद्वीर्य्याविरुद्धमश्नीयात् ।



इष्टे देशेऽश्नीयात् । इष्टे हि देशे भुञ्जानो नानिष्टदेशजैर्मनोविघातकरैर्भावैर्मनोविघातं प्राप्नोति । तथेष्टः सर्वोपकरणैः । तस्मादिष्टे देशे तथेष्टसर्वोपकरणं चाश्नीयात् ।

नातिद्रुतमश्नीयात् । अतिद्रुतं हि भुञ्जानस्य उत्स्नेहनमवसदनं भोजनस्याप्रतिष्ठानम् । भोज्यदोषसाद्गुण्योपलब्धिश्च न नियता । तस्मान्नातिद्रुतमश्नीयात् ।

नातिविलम्बितमश्नीयात् । अतिविलम्बितं हि भुञ्जानो न तृप्तिमधिगच्छति, बहु भुङ्क्ते, शीतीभवति चाहारजातं विषमपाकश्च भवति । तस्मान्नातिविलम्बितमश्नीयात् ।

अजल्पन्नहसन् तन्मना भुञ्जीत । जल्पतो हसतोऽन्यमनसो वा भुञ्जानस्य त एव हि दोषा भवन्ति य एवातिद्रुतमश्नतः । तस्मादजल्पन्नहसंस्तन्मना भुञ्जीत ।

आत्मानमभिसमीक्ष्य भुञ्जीत सम्यक् । इदं ममोपशेते इदं नोपशेते इति । विदितं हि अस्य आत्मन आत्मसात्म्यं भवति । तस्मादात्मनात्मानमभिसमीक्ष्य भुञ्जीत सम्यगिति ।

---

## ४०—आहारविषये श्लोकाः ।

पूजयेदशनं नित्यमद्याच्चैतदकुत्सयन् ।
दृष्ट्वा हृष्येत्प्रसीदेच्च प्रतिनन्देच्च सर्वशः ॥१॥
पूजितं ह्यशनं नित्यं बलमूर्जं च यच्छति ।
अपूजितं तु तद्भुक्तमुभयं नाशयेदिदम् ॥२॥
नोच्छिष्टं कस्यचिद् दद्यान्नाद्याच्चैव तथान्तरा ।
न चैवाध्यशनं कुर्यान्न चोच्छिष्टः क्वचिद् व्रजेत् ॥३॥
अनारोग्यमनायुष्यमस्वर्ग्यं चातिभोजनम् ।
अपुण्यं लोकविद्विष्टं तस्मात्तत्परिवर्जयेत् ॥४॥

---

## ४१—सद्वृत्तम् ।

" अक्षीणो वित्ततः क्षीणो वृत्ततस्तु हतो हतः । "

आत्महितं चिकीर्षता सर्वेण सर्वं सर्वदा स्मृतिमास्थाय सद्वृत्तमनुष्ठेयम् । तद्ध्यनुष्ठानं युगपत् संपादयत्यर्थद्वयमारोग्यमिन्द्रियविजयं चेति ।

तत्सद्वृत्तमखिलेनोपदेक्ष्यामः । तद्यथा देवगोब्राह्मणगुरुवृद्धसिद्धाचार्यानर्चयेत् । अग्निमुपाचरेत् । ओषधीः



प्रशस्ता धारयेत् । द्वौ कालावुपस्पृशेत् । मलायतनेष्वभीक्ष्णं पादयोश्च वैमल्यमादध्यात् । त्रिः पक्षस्य केशश्मश्रुलोमनखान्संहारयेत् । नित्यमनुपहतवासाः सुमनाः सुगन्धिः स्यात् । साधुवेशः प्रसाधितकेशो मूर्धश्रोत्रघ्राणपादतैलनित्य पूर्वाभिभाषी सुमुखो दुर्गेष्वभ्युपपत्ता होता यष्टा दाता बलीनामुपहर्ता अतिथीनां पूजकः पितृणां पिण्डदः काले हितमितमधुरार्थवादी । वश्यात्मधर्मात्मा हेतावीर्षुः फले नेर्षुः निश्चिन्तो निर्भीको ह्रीमान् धीमान् महोत्साहो दक्षः क्षमावान् धार्मिक आस्तिको विनयबुद्धिविद्याभिजनवयोवृद्धसिद्धाचार्याणामुपासिता छत्री दण्डी मौनी सोपानत्को युगमात्रदृग् विचरेत् ।

मङ्गलाचारशीलः, कुचेलास्थिकण्टकामेध्यकेशतुषोत्कररभस्मकपालस्नानबलिभूमीनां परिहर्ता, प्राक् श्रमाद् व्यायामवर्जी स्यात् । सर्वप्राणिषु बन्धुभूतः स्यात् । क्रुद्धानामनुनेता भीतानामाश्वासयिता दीनानामभ्युपपत्ता सत्यसन्धः सामप्रधानः परपरुषवचनसहिष्णुः अमर्षघ्नः प्रशमगुणदर्शी रागद्वेषहेतूनां हन्ता । नानृतं ब्रूयात् । नान्यस्वमाददीत ।

नान्यस्त्रियमभिलषेत्, नान्यश्रियम् । न वैरं रोचयेत् । न कुर्यात्पापं, न पापेऽपि पापी स्यात् । नान्यदोषान् ब्रूयात् । नान्यरहस्यमागमयेत् ।

नाधार्मिकैर्न नरेन्द्रद्विष्टैः सहासीत, नोन्मत्तैर्न पतितैर्न

भ्रूणहन्तृभिर्न क्षुद्रैर्न दुष्टैः। न दुष्टयानान्यारोहेत्। नानास्तीर्णमनुपहितमविशालमसमं वा शयनं प्रपद्येत। न गिरिविषममस्तकेष्वनुचरेत्। न द्रुममारोहेत्। न जलोग्रवेगमवगाहेत। कूलच्छायां नोपासीत। नाग्न्युत्पातमभितश्चरेत्। नोच्चैर्हसेत्। न शब्दवन्तं मारुतं मुञ्चेत्। नासंवृतमुखो जृम्भां क्षवथुं हास्यं वा प्रवर्तयेत्। न नासिकां कुष्णीयात्। न दन्तान्विघट्टयेत्। न नखान् वादयेत्। नास्थीन्यभिहन्यात्। न भूमिं विलिखेत्। न छिन्द्यात्तृणम्। न लोष्टं मृद्नीयात्।

न विगुणमङ्गैश्चेष्टेत। ज्योतींष्यग्निश्चामेध्यमशस्तं च नाभिवीक्षेत। नैकः शून्यगृहं न चाटवीमनुप्रविशेत्। न पापवृत्तान् स्त्रीमित्रभृत्यान् भजेत। नोत्तमैर्विरुध्येत। नावरानुपासीत। न जिह्मं रोचयेत्। नाऽनार्यमाश्रयेत्। न भयमुत्पादयेत्। न साहसातिस्वप्नप्रजागरस्नानपानाशनान्यासेवेत। नोर्ध्वजानुश्चिरं तिष्ठेत्। न व्यालानुपसर्पेत् न दंष्ट्रिणः न विषाणिनः। नाविगतक्लमो नाप्लुतवदनो न नग्न उपस्पृशेत्। न स्नानशाट्या स्पृशेदुत्तमाङ्गम्।

नारत्नपाणिर्नास्नातो नोपहतवासाः नाजपित्वा नाहुत्वा देवताभ्यो नाऽनिरूप्य पितृभ्यो नाऽदत्वा गुरुभ्यो नातिथिभ्यो नोपाश्रितेभ्यो नापुण्यगन्धो नामाली नाप्रक्षालितपाणिपादवदनो नाऽशुद्धमुखो नोदङ्मुखो न विमानाभक्ताशिष्टाशुचिक्षुधितपरिचरो नापात्रीष्वमेध्यासु नादेशे नाऽकाले नाकीर्णे



नाऽदत्त्वाग्रमग्नये नाप्रोक्षितं प्रोक्षणोदकैर्न मन्त्रैरनभिमन्त्रितं न कुत्सयन्न कुत्सितं न प्रतिकूलोपहितमन्नमाददीत न पर्युषितम्। नाऽशेषभुक् स्यात् अन्यत्र दधिमधुलवणसक्तुसर्पिर्भ्यः। न नक्तं दधि भुञ्जीत। न सक्तूनेकानश्नीयात्, न निशि न भुक्त्वा न बहून्न द्विर्नोदकान्तरितान्।

न छित्वा द्विजैर्भक्षयेत्। नाऽनृजुः क्षुयान्नाद्यान्न शयीत। न वेगितोऽन्यकार्यः स्यात्। न स्त्रियमवजानीत, नातिविश्रम्भयेत्, न गुह्यमनुश्रावयेत्, नाधिकुर्यात्। न सतो न गुरून्परिवदेत्। न विद्युत्स्वनार्त्तवीषु नाभ्युदितासु दिक्षु नाग्निसंप्लवे न भूमिकम्पे न महोत्सवे नोल्कापाते न महाग्रहोपगमने न नष्टचन्द्रायां तिथौ न संध्ययोर्नातिमात्रं नात्यन्तस्वरं न विस्वरं नानवस्थितपदं नातिद्रुतं न विलम्बितं नात्युच्चैर्नातिनीचैः स्वरैरध्ययनमभ्यस्येत्। नातिसमयं जह्यात्। न नियमं भिन्द्यात्।

नाधीरो नात्युच्छ्रितसत्त्वः स्यात्, नाभृतभृत्यो नाविश्रब्धस्वजनो नैकः सुखी न दुःखशीलाचारोपचारो न सर्वविश्रम्भी न सर्वाभिशङ्की न सर्वकालविचारी। न कार्यकालमतिपातयेत्। नापरीक्षितमभिनिविशेत। नेन्द्रियवशगः स्यात्।

न चञ्चलं मनो भ्रामयेत्। न बुद्धीन्द्रियाणामतिभारमादध्यात्। न चातिदीर्घसूत्री स्यात्। न क्रोधहर्षावनु-

विदध्यात् । न शोकवनुवशेत् । न सिद्धावौत्सुक्यं गच्छेत्, नासिद्धौ दैन्यम् । प्रकृतिमभीक्ष्णं स्मरेत् । हेतुप्रभावनिश्चितः स्यात् । हेत्वारम्भनित्यश्च । न कृतमित्याश्वसेत् । न वीर्यं जह्यात् । नापवादमनुस्मरेत् ।

आत्मानमाशीर्भिराशासमानः । अग्निर्मे नापगच्छेच्छरीरात् । वायुर्मे प्राणानादधातु । विष्णुर्मे बलमादधातु । इन्द्रो मे वीर्यम् । शिवा मां प्रविशन्त्वापः। आपो हिष्ठेत्यपः स्पृशेत् । द्विः परिमृज्यौष्ठौ पादौ चाभ्युक्ष्य मूर्धनि खानि चोपस्पृशेदद्भिः । आत्मानं हृदयं शिरश्च । ब्रह्मचर्यज्ञानदानमैत्रीकारुण्यहर्षोपेक्षाप्रशमपरश्च स्यादिति ।

अत्र श्लोकाः ।

स्वस्थवृत्तं यथोद्दिष्टं यः सम्यगनुतिष्ठति ।
स समाः शतमव्याधिरायुषा न वियुज्यते ॥
नृलोकमापूरयते यशसा साधुसम्मतः ।
धर्मात्मा चेति भूतानां बन्धुतामुपगच्छति ॥
परान् सुकृतिनो लोकान् पुण्यकर्मा प्रपद्यते ।
तस्माद् वृत्तमनुष्ठेयमिदं सर्वेण सर्वदा ॥

---



## ४२—महामुनिवर्णनम् ।

सर्वतेजस्विनामयं चाग्रणीः । द्विसूर्यमिवाभाति जगदनेनाधिष्ठितं महात्मना । निष्कम्पेव क्षितिरेतदवष्टम्भात् । एष प्रवाहः करुणारसस्य, संतरणसेतुः संसारसिन्धोः, आधारः क्षमाम्भसाम्, परशुस्तृष्णालतागहनस्य, सागरः सन्तोषामृतरसस्य, उपदेष्टा सिद्धिमार्गस्य, अस्तगिरिरसद्ग्रहस्य, मूलमुपशमतरोः, स्थितिवंशो धर्मध्वजस्य, तीर्थं सर्वविद्यावताराणाम्, वडवानलो लोभार्णवस्य, निकषोपलः शास्त्ररत्नानाम्, दावानलो रागपल्लवस्य, मन्त्रः क्रोधभुजंगस्य, दिवसकरो मोहान्धकारस्य, अर्गलाबन्धो नरकद्वाराणाम्, आयतनं मङ्गलानाम्, अभूमिर्मदविकाराणाम्, दर्शकः सत्पथानाम्, उत्पत्तिः साधुतायाः, नेमिरुत्साहचक्रस्य, आश्रयः सत्त्वस्य, प्रतिपक्षः कलिकालस्य, कोशस्तपसः, सखा सत्यस्य, क्षेत्रमार्जवस्य, प्रभवः पुण्यसंचयस्य, अदत्तावकाशो मत्सरस्य, अरातिर्विपत्तेः, अस्थानं परिभूतेः, अननुकूलोऽभिमानस्य, असंमतो दैन्यस्य, अनायत्तो रोषस्य, अनभिमुखः सुखानाम् । अस्य भगवतः प्रभावादेवोपशान्तवैरमपगतमत्सरं तपोवनम् ।

---

## ४३—शतायुर्वै पुरुषः ।

युधिष्ठिर उवाच—

शतायुर्वै पुरुषः शतवीर्यश्च जायते ।
कस्मान्म्रियन्ते पुरुषा बाला अपि पितामह ! ॥ १ ॥
आयुष्मान् केन भवति अल्पायुर्वापि मानवः ।
केन वा लभते कीर्तिं केन वा लभते श्रियम् ॥ २ ॥

भीष्म उवाच—

आचाराल्लभते ह्यायुराचाराल्लभते श्रियम् ।
आचारात्कीर्तिमाप्नोति पुरुषः प्रेत्य चेह च ॥ ३ ॥
आचारलक्षणो धर्मः संतश्चारित्रलक्षणाः ।
साधूनां च यथावृत्तमेतदाचारलक्षणम् ॥ ४ ॥
ये नास्तिका निष्क्रियाश्च गुरुशास्त्रातिलङ्घिनः ।
अधर्मज्ञा दुराचारास्ते भवन्ति गतायुषः ॥ ५ ॥
अक्रोधनः सत्यवादी भूतानामविहिंसकः ।
अनसूयुरजिह्मश्च शतं वर्षाणि जीवति ॥ ६ ॥
ब्राह्मे मुहूर्ते बुध्येत धर्मार्थौ चानुचिन्तयेत् ।
उत्थायाचम्य तिष्ठेत पूर्वां संध्यां कृताञ्जलिः ॥ ७ ॥
एवमेवापरां संध्यां समुपासीत वाग्यतः ।
ऋषयो नित्यसंध्यत्वाद्दीर्घमायुरवाप्नुवन् ॥ ८ ॥



ये न पूर्वामुपासन्ते द्विजाः संध्यां न पश्चिमाम् ।
सर्वांस्तान् धार्मिको राजा शूद्रकर्माणि कारयेत् ॥ ९ ॥
पुरीषमूत्रे नोदीक्षेन्नाधितिष्ठेत्कदाचन ।
पादप्रक्षालनं कुर्यात्स्वाध्याये भोजने तथा ॥ १० ॥
नित्यमग्निं परिचरेद्भिक्षां दद्याच्च नित्यदा ।
वाग्यतो दन्तकाष्ठं च नित्यमेव समाचरेत् ॥ १० ॥
मातापितरमुत्थाय पूर्वमेवाभिवादयेत् ।
आचार्यमथवाप्यन्यं तथायुर्विन्दते महत् ॥ १२ ॥
नोत्सृजेत पुरीषं च क्षेत्रे ग्रामस्य चान्तिके ।
उदङ्मुखश्च सततं शौचं कुर्यात्समाहितः ॥ १३ ॥
उदक्शिरा न स्वपेत तथा प्रत्यक्शिरा न च ।
न नग्नः कर्हिचित्स्नायात् न निशायां कदाचन ॥ १४ ॥
अन्नं बुभुक्षमाणस्तु त्रिर्मुखेन स्पृशेदपः ।
भुक्त्वा चान्नं तथैव त्रिर्द्विः पुनः परिमार्जयेत् ॥ १५ ॥
प्राङ्मुखो नित्यमश्नीयाद्वाग्यतोऽन्नमकुत्सयन् ।
निषण्णश्चापि खादेत न तु गच्छन् कदाचन ॥ १६ ॥
आर्द्रपादस्तु भुञ्जीत नार्द्रपादस्तु संविशेत् ।
सुप्तव्यं नैव नग्नेन न चोच्छिष्टोऽपि संविशेत् ॥ १७ ॥
न संहताभ्यां पाणिभ्यां कण्डूयेदात्मनः शिरः ।
न चाभीक्ष्णं शिरः स्नायात्तथास्यायुर्न रिष्यते ॥ १८ ॥

प्रत्यादित्यं प्रत्यनलं प्रति गां च प्रति द्विजान् ।
ये मेहन्ति च पन्थानं ते भवन्ति गतायुषः ॥ १९ ॥
गुरुणा चैव निर्बन्धो न कर्तव्यः कदाचन ।
अनुमान्यः प्रसाद्यश्च गुरुः क्रुद्धो युधिष्ठिर ! ॥ २० ॥
दूरादावसथान्मूत्रं दूरात्पादावसेचनम् ।
उच्छिष्टोत्सर्जनं चैव दूरे कार्यं हितैषिणा ॥ २१ ॥
अन्यदेव भवेद्वासः शयनीये नरोत्तम ! ।
अन्यद्रथ्यासु देवानामर्चायामन्यदेव हि ॥ २२ ॥
समानमेकपात्रे तु भुञ्जेन्नान्नं जनेश्वर ! ।
न सन्निकृष्टो मेधावी नाशुचेर्न च सत्सु च ॥ २३ ॥
पिप्पलं च वटं चैव शणशाकं तथैव च ।
उदुम्बरं न खादेत भवार्थी पुरुषोत्तम ! ॥ २४ ॥
सायं प्रातश्च भुञ्जीत नान्तराले समाहितः ।
भूमौ सदैव नाश्नीयान्नानासीनो न शब्दवत् ॥ २५ ॥
पानीयं पायसं सक्तून् दधिसर्पिर्मधून्यपि ।
निरस्य शेषमेतेषां न प्रदेयं तु कस्यचित् ॥ २६ ॥
पानीयस्य क्रिया नक्तं न कार्या भूतिमिच्छता ।
वर्जनीयाश्चैव नित्यं सक्तवो निशि भारत ! ॥ २७ ॥
सौहित्यं न च कर्तव्यं रात्रौ न च समाचरेत् ।
द्विजच्छेदं न कुर्वीत भुक्त्वा न च समाचरेत् ॥ २८ ॥



उपानहौ च वस्त्रं च धृतमन्यैर्न धारयेत् ।
ब्रह्मचारी च नित्यं स्यात्पादं पादेन नाक्रमेत् ॥ २९ ॥
हीनाङ्गानतिरिक्ताङ्गान् विद्याहीनान् विगर्हितान् ।
रूपद्रविणहीनांश्च सत्यहीनांश्च नाक्षिपेत् ॥ ३० ॥
पन्था देयो ब्राह्मणाय गोभ्यो राजभ्य एव च ।
वृद्धाय भारतप्ताय गर्भिण्यै दुर्बलाय च ॥ ३१ ॥
महाकुले प्रसूतां च प्रशस्तां लक्षणान्विताम् ।
वयस्थां च महाप्राज्ञ कन्यामावोढुमर्हति ॥ ३२ ॥
न चेर्ष्या स्त्रीषु कर्तव्या रक्ष्या दाराश्च सर्वशः ।
अनायुष्या भवेदीर्ष्या तस्मादीर्ष्यां विवर्जयेत् ॥ ३३ ॥
अनायुष्यं दिवा स्वप्नं तथाभ्युदितशायिता ।
अनिमन्त्रितो न गच्छेत् यज्ञं गच्छेत्तु दर्शकः ॥ ३४ ॥
धनुर्वेदे च वेदे च यत्नः कार्यो नराधिप ! ।
हस्तिपृष्ठेऽश्वपृष्ठे च रथचर्यासु चैव हि ॥ ३५ ॥
यत्नवान् भव राजेन्द्र ! यत्नवान् सुखमेधते ।
युक्तिशास्त्रं च ते ज्ञेयं शब्दशास्त्रं च भारत ! ॥ ३६ ॥
गन्धर्वशास्त्रं च कलाः परिज्ञेया नराधिप ! ।
महात्मनां च चरितं श्रोतव्यं नित्यमेव ते ॥ ३७ ॥
ज्ञातिसंबन्धिमित्राणि पूजनीयानि सर्वशः ।
यष्टव्यं च यथाशक्ति यज्ञैर्विविधदक्षिणैः ॥ ३८ ॥

अत ऊर्ध्वमरण्यं च सेवितव्यं नराधिप ।
एष ते लक्षणोद्देश आयुष्याणां प्रकीर्तितः ॥ ३९ ॥

---

## ४४—भारतवर्षमहिमा ।

( विष्णुपुराणे २।३ )

गायन्ति देवाः किल गीतकानि
धन्यास्तु ते भारतभूमिभागे ।
स्वर्गापवर्गास्पदमार्गभूते
भवन्ति भूयः पुरुषाः सुरत्वात् ॥ १ ॥

कर्माण्यसंकल्पिततत्फलानि
संन्यस्य विष्णौ परमात्मभूते ।
अवाप्य तां कर्ममहीमनन्ते
तस्मिँल्लयं ये त्वमलाः प्रयान्ति ॥ २ ॥

जानीम नैतत् क वयं विलीने
स्वर्गप्रदे कर्मणि देहबन्धम् ।
प्राप्स्याम, धन्याः खलु ते मनुष्या
ये भारते नेन्द्रियविप्रहीनाः ॥ ३ ॥



( भागवते ५।६।१३ )

अहो भुवः सप्तसमुद्रवत्या
द्वीपेषु वर्षेष्वधिपुण्यमेतत् ।
गायन्ति यत्रत्यजना मुरारेः
कर्माणि भद्राण्यवतारवन्ति ।

( भागवते ५।१९।२१ )

एतदेव हि देवा गायन्ति :—

अहो अमीषां किमकारि शोभनं
प्रसन्न एषां स्विदुत स्वयं हरिः ।
यैर्जन्म लब्धं नृषु भारताजिरे
मुकुन्दसेवौपयिकं स्पृहा हि नः ॥ १ ॥

किं दुष्करैर्नः क्रतुभिस्तपोव्रतै-
र्दानादिभिर्वा द्युजयेन फल्गुना ।
न यत्र नारायणपादपङ्कज-
स्मृतिः प्रमुष्टातिशयेन्द्रियोत्सवात् ॥ २ ॥

कल्पायुषां स्थानजयात्पुनर्भवात्
क्षणायुषां भारतभूजयो वरम् ।
क्षणेन मर्त्येन कृतं मनस्विनः
संन्यस्य संयान्त्यभयं पदं हरेः ॥ ३ ॥

न यत्र वैकुण्ठकथासुधापगा
न साधवो भागवतास्तदाश्रयाः ।
न यत्र यज्ञेशमखा महोत्सवाः
सुरेशलोकोऽपि न वै स सेव्यताम् ॥ ४ ॥

प्राप्ता नृजातिं त्विह ये च जन्तवो
ज्ञानक्रियाद्रव्यकलापसंभृताम् ।
न वै यतेरन्नपुनर्भवाय ते
भूयो वनौका इव यान्ति बन्धनम् ॥ ५ ॥




